सन्त्यस्मिन् बहुधा विरोधगतयो लक्ष्ये च लक्ष्मोदिते
जानन्तीह सुलक्ष्मपक्षविगतिं केचित्परे लौकिकीम् ।
तत्कुर्वन्तु सुलक्ष्मलक्ष्यसहितं रागप्रकाशम्बुधा[1]
इत्युक्ते बुरहानखाननृपतौ विद्वत्सभामण्डले ॥९॥

श्रीमद्धनूमद्भरतार्जुनादिहार्दं समादाय सतां जनानाम् ।
तमोनिरासाय विलासगत्यै सद्रागचन्द्रोदयमातनोमि ॥१०॥

अहो बुधाः पूर्णविधूदयेऽस्मिन् तमःस्वरूपो ग्रहणैकलोलः ।
क्रूराशयो यस्त[2]-दुपान्तमेति तदा प्रदध्वं निजलक्ष्यचक्रम् ॥११॥

लक्ष्यप्रधानं खलु शास्त्रमेतन्निःशङ्कदेवोऽपि तदेव वष्टि ।
यल्लक्ष्मलक्ष्यप्रतिबन्धकं स्यात्तदन्यथा नेयमिति ब्रुवाणः ॥१२॥

अत्र प्रसादत्रितयम्प्रयुक्तं स्वरप्रसादः प्रथमस्तु तत्र ।
द्वितीयकः स्यात्स्वरमेलनामा तृतीय आलप्तिगतप्रसादः ॥१३॥

तत्राऽऽदिमे नादसमुद्भवश्च तत्स्थानकानि श्रुतयः स्वराश्च ।
विकारभेदा अथ वादिमुख्या[3]- ग्रामस्तथा तद्गतमूर्च्छनाश्च[3] ॥१४॥

तानाश्च तत्प्रस्तरणञ्च सङ्ख्या नष्टन्तथोद्दिष्टमथ ग्रहाद्याः ।
वर्णास्तथालङ्करणङ्क्रमेण वक्ष्यन्त एतानि ततो द्वितीये ॥१५॥

वीणाप्रशंसामथ वीणिकायां तन्त्रीः सषड्जादिकसारिकाद्याः[4] ।
मेलेषु च प्रस्तरणप्रकारसङ्ख्याः कियन्मेलकलक्षणानि ॥१६॥

तेभ्यः पृथग्रागजनिं च रागलक्ष्माणि वक्ष्यामि तथा तृतीये ।
आलप्तिकाद्यं गमकोक्तिपूर्वङ्कियत्सु रागेष्वपि वादनानि ॥१७॥

**नादः**

स्वरादिकन्नादसमुद्भवं स्यान्नादन्ततस्तावदुदीरयामि ।
युज्येत चात्मा मनसा विवक्षुर्मनोग्निनाग्निस्त्वनिलेश्वरेण ॥१८॥

---

1. A. बुधैः
2. B. ग्रस्त
3-3. मुद्रितपुस्तके 'ग्रामत्रयं चाऽपि च मूर्च्छनाश्च' इति पाठः ।
4. B. C. E. 'स्याम्

ब्रह्मादिमग्रन्थिमितः[1]स मुख्यः प्राणः क्रमेणोर्ध्वगतिं दधानः ।
नाभौ तथा हृद्यथ कण्ठदेशे मूर्ध्न्याननें[2] ध्वानमुपादधीत[3] ॥१६॥

नाभ्यादिपञ्चाश्रयगोऽतिसूक्ष्मः सूक्ष्मश्च पुष्टश्च तथाऽतिपुष्टः ।
सकृत्रिमश्चेति भिदा क्रमेण नदस्य शब्दे घञि नादधातुः[4] ॥२०॥

हृत्कण्ठमूर्धाश्रयगः क्रमेण त्रैविध्यमृच्छेद् व्यवहारतोऽयम्
मन्द्रश्च मध्याभिधकस्तु[5] तारः पूर्वात्परः स्याद्द्विगुणः क्रमेण ॥२१॥

**श्रुतयः ।**

ऊर्ध्वस्थितायां हृदि नाडिकायां नाड्यस्तिरश्च्यः[6] पवनाहतास्ताः ।
द्वाविंशतिस्तीक्ष्णतराः क्रमेण नादन्तु तावत् श्रुतितां नयन्ति ॥२२॥

कण्ठप्रदेशेऽप्यथ मूर्धदेशे[7] द्वाविंशतिः स्युः श्रुतयस्तथैव ।
स्वराः श्रुतिभ्यः प्रभवन्ति ते तु षड्जादयः सप्त यथा क्रमेण ॥२३॥

वेदाऽग्निपक्षाऽब्धिपयोधिवह्निपक्षान्तिमश्रुत्यधिसंश्रिताः स्युः ।
षड्जाभिधानस्त्वृषभस्ततः स्याद्गान्धारको मध्यमपञ्चमौ च ॥२४॥

ततः परं धैवतको निषाद इति स्वराः सप्त मता मुनीन्द्रैः ।
सरी गमौ पश्च धनी क्रमेणेत्येषां स्वराणामभिधाः पराः स्युः ॥२५॥

श्रुतेश्च नैरन्तरभाविको यः स्निग्धोऽनुशब्दात्मज[8]-कर्तृ सात्मा-[8] ।
श्रोतुर्मनोरञ्जनकारकत्वात् स्वतस्तु तज्ज्ञैरुदितः स्वरोऽसौ ॥२६॥

---

1. A श्रितः ।
2. B मूर्ध्यानिने ।
3. मुद्रितपुस्तके ध्वानमुपाकरोतीति पाठः ।
4. B उक्तः
5. B ह्यकश्च
6. A नाड्यस्तु तिर्यक्
7. C मूर्ध्वदेशे
8. (1) A स्निग्धोऽनुरण्यात्मकजो हि सात्मा (C) स्निग्धोऽनुशब्दात्मकत्रंज सात्मा ?
मुद्रितपुस्तके स्निग्धोनुशब्दात्मक ओजसात्मा

[1]-स्थानप्रभेदात् त्रिविधा भवेयुः पूर्वोदितैर्मन्द्रकपूर्वभेदैः ।
तथापि ते सप्त भवन्ति साद्याः स्थानत्रयादप्यधिकत्वभाजः-[1] ॥२७॥

क्रमान्मयूराह्वयचातकाऽऽजक्रौञ्चाभिधाः कोकिलदर्दुराख्यौ ।
मतङ्गजश्चामलमुच्चरन्ति षड्जादिकानित्युदितम्मुनीन्द्रैः ॥२८॥

**विकृतस्वराः ।**

शुद्धाः स्वरा ये तु भवन्ति सप्त तज्जान्विकारान्प्रवदामि सप्त ।
स्वोपान्तिकश्रुत्यधिसंस्थितः स्यात् षड्जाभिधानो लघुषड्जनामा ॥२९॥

एवं मपौ[2] स्तो लघुशब्दपूर्वौ साधारणो गः प्रथमश्रुतिस्थः ।
मस्य द्वितीयश्रुतिगोऽन्तरः स्यात् षड्जाह्वयस्य प्रथमश्रुतिस्थः ॥३०॥

तथा द्वितीयश्रुतिवर्तमानो निःकैशिकी काकलिनामधेयः ।
स्वस्थानकस्थेषु च तेषु नेष्टाः स्वरेषु भेदा विकृता मुनीन्द्रैः ॥३१॥

नोपाददे धस्य विकारभेदं निःशङ्कसूरी खलु कूटताने ।
सर्वे युगास्ते[3] विकृताश्च शुद्धाश्चतुर्दशैवेति मतम्मदीयम् ॥३२॥

अथो रिधावाद्यगनीश्रुतिस्थौ लक्ष्येषु वेदश्रुतिकौ भवेताम् ।
मः पञ्चमाद्यां श्रुतिमेत्य लक्ष्ये क्वचिच्च पञ्चश्रुतिताम्प्रयाति ॥३३॥

चतुर्दशाणां गदितस्वराणां कियत्सु रागेषु भवेयुरेते ।
ननु स्वरस्य श्रुतितः पृथक्त्वन्त्वया यदुक्तन्न तथा प्रयुक्तम्[4] ॥३४॥

साद्यश्रुतेः कैशिकिनेश्च भेदः कुतस्तथाऽन्यश्रुतितः स्वराणाम् ?
यथेश्वरप्रेरितवातचक्रघातात् प्रभूतध्वनिरेव नाड्याम्[5] ॥३५॥

---

1-1. श्लोकोऽयं मुद्रितपुस्तके नोपलभ्यते

2. ( पूस्तो ?

3. A युतास्ते ।

4. B. C. ऽप्रयुक्तम् ।

5. A नाड्यात् ।

प्र गृघात मात्रच्छ्रवणाच्छ्रुतिश्चाऽनुध्वानरूपस्व र इत्यकिञ्चित् ।
यैर्जातयः पञ्च मताःश्रुतीनान्ते तु प्रमाणम्प्रवदन्ति तन्नः ॥३६॥

त द्धेतुता चेत्स्वरभेदसिद्धौ मैवं मृषा स्याच्चलवीणिकायाम्[1] ।

**चतुर्विधाः स्वराः**

चतुर्विधास्ते तु भवन्ति साद्या वादी च संवादिविवादिनौ च ॥३७॥

तथानुवादीति मतः स वादी स्वरः प्रयोगे बहुलत्वमेति ।
यावन्तराष्टश्रुतयो द्विषड्वा संवादिनौ तौ भवतौ मिथश्च ॥३८॥

एकश्रुतेरन्तरितौ स्वरौ यौ विवादिनौ तौ तु मिथः सदा स्तः ।
शेषस्वराणामनुवादिता स्यादन्वर्थनामान इमे भवेयुः ॥३९॥

**ग्रामः**

ग्रामः स्वराणां गदितः समूहो यो मूर्च्छनाद्याश्रयताम्प्रपन्नः ।
षड्जः स्वराणाञ्जनको यतः[2]-स्याद्ग्रामे ततो मुख्यतयैष एव[2] ॥४०॥

रागेषु सग्रामजनित्वमेव दृष्टन्ततो ग्रामयुगन्नहीष्टम् ।

**मूर्च्छना:**

आरोहणञ्च क्रमतोऽवरोहः सप्तस्वराणामिति मूर्च्छनोक्ता ॥४१॥

ताः सप्त मध्यस्थितषड्जपङ्क्तावधस्तनैर्न्यादिभिरेव तत्र ।
संसारणीयास्तु यथाक्रमेण षड्जादिकाद्याः पुरतो भवेयुः ॥४२॥

यां मूर्च्छनां यावतिथश्च षड्जः श्रयेदियन्तावतिथत्वमेति ।
षड्जादिभा तूत्तरमन्द्रिकाद्या[3] निषादपूर्वा रजनी द्वितीया ॥४३॥

धाद्युत्तराद्यायतिका तृतीया तुर्या पपूर्वाऽपि च शुद्धषड्जा ।
मादिस्ततः पञ्चममूर्च्छना तु नाम्ना कृता मत्सरिपूर्विकेति ॥४४॥

---

1. पद्यांशोऽयं मुद्रितपुस्तके नोपलभ्यते ।
2-2. A स्याद्रागे ततः मुख्यतयैव एव । मुद्रितपुस्तके 'स्याद्ग्रामस्ततो मुख्यतयैव एष' ।
3. A स्यान् ।

गादिस्तु षष्ठी गदिता[1] तु नाम्नाऽश्वक्रान्तिकार्यादिभिरुद्गतान्त्या ।
ता मूर्च्छनाः षाडवितीकृताश्च क्वचित्तथैवौडुवितीकृताः स्युः ।।४५।।

ताः शुद्धतानाः कथिता मुनीन्द्रैः सर्वेषु रागेषु विचारणीयाः ।

**द्विविधा तानक्रिया**

तानस्य तन्त्र्यां द्विविधा क्रिया स्यात् प्रवेशतो निग्रहतस्तथैव ।।४६।।

पूर्वः प्रकर्षोत्तरमार्दवस्तु प्रवेशको स्पर्शकनिग्रहः स्यात् ।
इति प्रगोता भरतादिभिश्च गीतोपयोगात्किल मूर्च्छनासु ।।४७।।

**कूटतानाः**

ता व्युत्क्रमोच्चारयुतस्वरास्तु पूर्णा अपूर्णा अपि कूटतानाः ।

**कूटतानप्रस्तारः**

न्यस्य क्रमं स्थापय पूर्वपूर्वः स्वरः (२) पराधः स यदाग्रवर्ती ।।४८।।

तत्पूर्वमस्योपरि गात् पुरः प्राङ् मूलक्रमस्य क्रमतस्तु शेषान् ।

**परिगणितपूर्णापूर्णकूटतानसंख्यापरिज्ञानोपायम्**

एकादिकाङ्कान् विलिखेत्तु सप्त पूर्वेण पूर्वेण परे परेऽत्र ।।४९।।

हते क्रमेण प्रतिमूर्च्छनं स्यात् संख्यानमेकस्वरपूर्विकाणाम् ।

**नष्टखण्डः**

ये मूर्च्छनान्त्यस्वरसंस्थिताङ्कास्तान्पातयेत् प्रश्नसमुत्थिताङ्कैः ।।५०।।

शेषान्यथार्हं हननप्रपन्नैः पूर्वस्वराङ्कैश्च यथाक्रमेण ।
येनाहतिस्तावतिथः स्वरः स्याद्धतेरभावेऽगणनीयलब्धिः ।।५१।।

प्रोक्तं द्वितीयाद्गणनन्तथैव श्रीविठ्ठलोऽभाषत नष्टसिद्धिम् ।

**उद्दिष्टः**

[4]-नष्टस्य येबोधगतां[3] प्रपन्ना अङ्कैश्च तैरन्तगतस्वराणाम्-[4] ।।५२।।

---

1. C गदिते B गदितेति ।
2 पूर्वपूर्वस्वरं
3. B बोधकतां ।
4-4. पद्यांशोऽयं मुद्रितपुस्तके नोपलभ्यते ।

[1]-अङ्केषु सम्पातनतोऽवशिष्टादुद्दिष्टसिद्धिः कथिता मयैषा[1] ।

**ग्रह-न्यास-अंश-विदारिका-अपन्यासाः**

गीतादिवर्ती ग्रह ईरितश्च स्वरः प्रयोगे बहुलोंऽशनामा ।।५३।।

विदारिकायाश्च समापको योऽपन्यासनामा कथितः स्वरोऽसौ ।
विच्छिद्य विच्छिद्य कृतः प्रयोगो यः स्याद्विदारीत्युपगीयते च ।।५४।।

न्यासश्च गीतस्य समाप्तिकृत् स्यादेते तु सर्वत्र भवन्ति रागे ।
सर्वत्र षड्जो ग्रह एव रागे रक्त्यैक[2] हेतोर्निधपादयो ये ।।५५।।

वर्णाः प्रयोज्या न तु ते स्वराश्च ता मूर्च्छनाः षड्जभवा ह्यशेषाः ।

**वर्णः**

गानक्रिया वर्ण इति प्रदिष्टो बुधैर्भवेदेष चतुर्विधस्तु ।।५६।।

स्थायी तथाऽऽरोह्यवरोहिणौ च सञ्चारिनामेत्यथलक्ष्म वक्ष्ये ।
एकस्वरस्यैव कृतः प्रयोगो विश्रम्य विश्रम्य भवेत्स आद्यः ।।५७।।

वर्णौ द्वितीयोऽथ तृतीयकःस्तोऽन्वर्थाभिधौ मिश्रणतस्तु तुर्यः ।

**अलङ्काराः**

विशिष्टवर्णौघ उदीर्यते चाऽलङ्कारकस्तत्र बहुप्रभेदाः ।।५८।।

नोदीरिता विस्तरशङ्कितेन कति प्रसिद्धानभिवर्णयामि ।
स्यादादिमोन्त्यस्वर एक एव येषाममी स्थायिनि संस्थितास्ते ।।५९।।

प्रसन्नपूर्वोऽन्तगतप्रसन्नः प्रसन्नपूर्वान्तिकनामधेयः ।
प्रसन्नमध्यः क्रमरेचिताख्यः पञ्चेत्यमी स्थायिनि संस्थिताः स्युः ।।६०।।

**मन्द्रतारलक्षणम्**

यो मूर्च्छनायां प्रथमस्वरस्तु[3] मन्द्राऽधिकारेऽत्र निरूपितोऽसौ ।
तारस्तु मन्द्राद्द्विगुणः प्रयुक्तो मध्यस्तु यस्तद्द्वयमाश्रितो वा ।।६१।।

मन्द्रः प्रसन्नो मृदुनामधेयस्तारस्तु दीप्तोऽथ लिपौ खमूर्धा ।
मन्द्रस्तु तारः शिरऊर्ध्वरेखा तथा त्रिरुक्ते प्लुतनामधेयः ।।६२।।

---

1-1. पद्यांशोऽयं मुद्रितपुस्तके नोपलभ्यते ।
2. A तथैक ।
3. A स्वरोक्तः ।

मन्द्रद्वयाद्दीप्तपुरः स्थिते तु प्रसन्नपूर्वं प्रवदन्ति तज्ज्ञाः ।

सं पं सं

इति प्रसन्नपूर्वः (१)

तद्वैपरीत्येन गतप्रसन्नः

सपं सं

इति प्रसन्नान्तः (२)

प्रसन्नयोर्मध्यगते तु तारे ॥६३॥

प्रसन्नपूर्वान्तिकनामधेयोऽलङ्कारकोऽसौ मुनिनोपदिष्टः ।

सं स सं

इति प्रसन्नाद्यन्तः (३)

मन्द्रेऽपि तारद्वयमध्ययाते प्रसन्नमध्यम्प्रवदन्ति धीराः ॥६४॥

स सं स

इति प्रसन्नमध्यः (४)

स्यान्मूर्च्छनायाः प्रथमः स्वरश्चेदन्तर्द्वितीयोऽपि तदा कलैका ।
द्वितीयतुर्यावथ मध्यगौ चेत्तदा द्वितीया कथिता कलैषा ॥६५॥

अन्तर्यदा पञ्चमपूर्वकाः स्युस्त्रयस्तृतीया तु कला तदा स्यात् ।
कलात्रयेणेति बुधैः प्रगीतोऽलङ्कारकोऽयं क्रमरेचिताख्यः ॥६६॥

(सं रि सं), सं ग म सं, सं पधनिसं

इति क्रमरेचितः (५)

इति स्थायिगताऽलङ्काराः ।

**आरोहिगाः**

विस्तीर्णनामा त्वथ सन्निकर्षः प्रेङ्खाख्यबिन्दू हसिताभिधानः ।
प्रच्छादनाऽक्षिप्तकनामधेयावारोहिगाः सप्त मता मुनीन्द्रैः ॥६७॥

यन्मूर्च्छनादेः स्वरतः क्रमेण विश्रम्य विश्रम्य विलम्बवद्भिः ।
स्वरैर्यदा रोहणमादधाति विस्तीर्णनामाभिहितस्तदाऽयम् ॥६८॥

सा री गा मा पा धा नी । इति विस्तीर्णः । (१)

ह्रस्वैः स्वरैर्द्विर्द्विरुदीरितैश्च निरन्तरैः सन्निपदादिकर्षः ॥६९॥

सस रिरि गग मम पप धध निनि । इति सन्निकर्षः । (२)

यत्र स्वरद्वन्द्वमुदीर्य पूर्वपूर्वोपयुक्तं स्वरमग्रसंस्थम् ।
आन्दोल्यमानञ्च यथाक्रमेणाऽऽरोहेदसौ प्रेङ्खकनामधेयः ॥७०॥

सरी रिगा गमा मपा पधा धनी । इति प्रेङ्खः ॥ (३)

प्लुतन्तथा ह्रस्वमपि प्लुतञ्च ह्रस्वं प्लुतं ह्रस्वमथ प्लुतञ्च ।
कुर्वन्स्वरं याति यथाक्रमेणाऽऽरोहेत्तदा बिन्दुरुदीर्यतेऽसौ ॥७१॥

ससससरी गगगमा पपपधा निनिनिसा । इति बिन्दुः ॥ (४)

स्वरेषु चैकोत्तरवर्धिताभिरावृत्तिभिर्यैर्हि समीरितेषु ।
आद्यन्त[1] आरोहमनुक्रमेण धीरास्तदाहुर्हसिताभिधानम् ॥७२॥

स रिरी गगगा ममममा पपपपपा धधधधधधा
निनिनिनिनिनिनिनी । हसितः ॥ (५)

स्यात् त्रिस्वराद्या तु कला तथाऽन्ये द्वे पूर्वपूर्वान्तिक पूर्विके स्तः ।
अत्रिस्वरे यत्र कले स सद्भिः प्रच्छादनाख्यः कथितस्तदानीम् ॥७३॥

सरिगा गमपा पधनी धनिसा । इति प्रच्छादनः ॥ (६)

एकान्तरोच्चारयुतस्वरेषु पूर्वान्तितत्वेन पुरः स्थितस्य ।
आरोहणं स्यात्तु यथाक्रमेण यदा तदाऽऽक्षिप्तक उच्यतेऽसौ ॥७४॥

सगा गपा पनी । इत्याक्षिप्तः ॥ (७)

आरोहणे लक्षितसप्तभेदास्ते चाऽवरोहे क्रमतो भवेयुः ।
इत्यारोह्यवरोह्यलङ्काराः ।
प्रसादकः प्रेङ्खकरञ्जिताख्यावुत्क्षेपनामा परिवर्तकश्च ॥७५॥

निष्कूजितोद्वाहितरेचिताख्याः हुङ्कारकाख्यः स्खलितः क्रमश्च ।
श्येनस्ततो ह्लादपदादिमानः सञ्चारिगश्चाग्निहिमांशुसङ्ख्या ॥७६॥

---

1. मुद्रितपुस्तके आद्यत्त इति पाठः ।

चेत्पूर्वपूर्वः क्रियते स्वरस्य परस्य च ध्वाधरतः प्रसादः ।
सरिसा रिगरी गमगा मपमा पधपा धनिधा निसनी ।

इति प्रसादः (१)

गतागतं सन्दधती कला चेत् स्याद्द्विःस्वरैकैकविवर्जितेन ।।७७।।

भवेयुरन्याश्च कलास्तदानीम्प्रेक्षाह्वयोऽसौ कथितः कवीन्द्रैः ।
सरीरिसा, रिगागरी, गमा मगा, मपा पमा, पधा धपा, धनीनिधा, निसा सनी । इति प्रेक्षः ।।[1] (२)

द्विरुक्तमन्द्रान्तकला तथैव मन्द्रादितोऽन्या यदि रञ्जितः स्यात् ।।७८।।

सारिग सरिगसा रिगमरिगमरी गमपगमपगा मपधमपधमा पधनिप-धनिपा धनिसधनिसधा । इति रञ्जितः ।। (३)

चेत्पूर्वपूर्वन्यसनोर्ध्वलम्भस्तूत्क्षेपकस्त्रिस्वरवत्कलासु ।
सरिगा रिगमा गमपा मपधा पधनी धनिसा ।

इत्युत्क्षेपः ।। (४)

[2]-स्यात् त्रिस्वराद्या तु कला विमुच्य द्वितीयकं रभ्यत एवमुक्तात् ।।७९।।

तद्वत्कलाश्चेदपरा भवेयुस्तदोदितोऽसौ परिवर्तकाख्यः-[2] ।
सगमा रिमपा गपधा मधनी पनिसा ।

इति परिवर्त्तकः ।। (५)

गीत्वा प्रसादस्थ कलां कलादेस्तृतीयमेत्यादिमगानतः स्युः ।।८०।।

यदा तदा लोकमनोभिरामं निष्कूजिताख्यम्प्रवदन्ति धीराः ।
सरिसगसा रिगरिमरी गमगपगा मपमधमा पधपनिपा धनिधसधा ।

इति निष्कूजितः ।। (६)

गीत्वा स्वरांस्त्रीनवरुह्य चैकम्पराः कला यत्र भवन्ति गीताः ।।८१।।

एकैकरिक्ता विहितः स एषोऽलङ्कार उद्वाहितनामयुक्तः ।
सरिगरी रिगमग गमपमा मपधपा पधनिधा धनिसनी ।

---

1. नर्तननिर्णये अलङ्कारस्यास्य नाम प्राङ्मुखः ।
2-2. पाठोऽयं मुद्रितपुस्तके नोपलभ्यते ।

इत्युद्वाहितः ।। (७)

[1]आद्यस्वरन्ततपरकन्तृतीयम्पुनर्द्वितीयम्प्रथमं क्रमात् त्रीन् ।।८२।।

गत्वा कलैका यदि चेत्कलायाः षट्कम्भवेद्रेचितनामधेयः ।।

सरिगरिसरिगारिगमगरिगमा गमपमगमपा

मपधपमपधा पधनिधपधनी धनिसनिधनिसा ।

इति रेचितः ।। (८)

चेद्द्विस्वरीपूर्वकला भवेयुः पूर्वेण चैकोत्तरवर्धमानैः ।।८३।।

स्वरैर्गतिं चागतिमादधानैर्हुङ्कारनामाभिहितस्तदाऽयम् ।

सरिसा सरिगरिसा सरिगमगरिसा सरिगमपमगरिसा

सरिगमपधपमगरिसा सरिगमपधनिधपमगरिसा ।

इति हुङ्कारः ।। (९)

प्रयुज्य मन्द्रादिकलां द्विरुक्तपरस्वरेणोपगताममीषु ।।८४।।

स्वरेषु दध्यादवरोहणा चेत्तदा मतोऽसौ स्खलिताभिधानः ।

सगरिममरिगसा रिमगपपगमरी गपमधधमपगा मधपनिनिपधमा

पनिधससधनिपा ।

इति स्खलितः ।। (१०)

पक्षत्रिवेदस्वरवत्कलाश्चेत् क्रमेण तिस्रः प्रथमस्वराद्याः ।।८५।।

तथा द्वितीयादिकपूर्विकाः स्युर्भवेत्तदैष क्रमनामधेयः ।

सरिसरिगसरिगमा रिगरिगमरिगमपा गमगमपगमपधा मपमपधमपधनी

पधपधनिपधनिसा ।

इतिक्रमः ।। (११)

स्वरैः सपूर्वैश्च यथाक्रमेण श्येनस्तु संवादिकयुग्मकैः स्यात् ।।८६।।

सपा रिधा गनी मसा । इति श्येनः ।। (१२)

---

1. श्लोकोऽयं मुद्रितपुस्तके नोपलभ्यते ।

मृद्वन्तमन्द्रादिकतास्तु यत्र स ह्लादमानाह्वयकः प्रणीतः ।
सगरिसा रिमगरी गपमगा मधपमा पनिधपा धसनिधा ।

इति ह्लादमानः ।। (१३)

सञ्चार्यलङ्कारगणः प्रयुक्त आरोहितः सोप्यवरोहितः स्यात् ।।८७।।

बालप्रबोधाय[1] कियत्प्रणीता बुधैर्यथेष्टम्परिकल्पनीयाः ।
ज्ञानं स्वराणामथ रक्तिलाभो वर्णाङ्गवैचित्र्यमलङ्कृतेः स्युः ।।८८।।

श्रुतिकलितसुनादस्थानसर्वस्वराणां
विमलतरसुवर्णालङ्कृतीनाञ्च भेदः ।
भुवि सुजननिवासः ग्रामतानाद्[2]-दिकानां
नृपवरबुरहानेनात्र निर्णीत एव ।।८९।।

इति श्रीकर्णाटकजातीय-पंडरीकविठ्ठलविरचिते सद्रागचन्द्रोदये
स्वरप्रसादः प्रथमः ।

---

1. A.C बालावबोधाय ।
2 ग्रामज्ञाना ।

# अथ द्वितीयः प्रसादः

अथ स्वराः येऽत्र[1] मताश्च भेदा ग्रहादयो वर्णगता विशेषाः ।
वीणाश्रिताथ्व्यक्तिरतो ह्यमीषां वीणास्वरूपम्प्रतिपादयामि ।।१।।

दण्डे रमेशोऽत्र तदीयभार्या तन्त्र्याम्महेशः ककुभेऽप्युमा स्यात् ।
पत्र्यान्तु तुम्बे कथितो विधाता नाभौ सरस्वत्यपि दोरके तु ।।२।।

नागेश्वरः शीतकरश्च जीवे सार्याम्प्रदिष्टो दिवसाधिनाथः ।
तथाऽश्विनौ कीलयुगे तु मेरौ देवाधिपो देवमयीति वीणा ।।३।।

नरम्महापातकिनम्पुनाति दृष्टा तदा हस्तगता पुनः किम् ?
यः मात्कपालिप्रियताम्प्रपन्ना तद्रुद्रवीणा कथयन्ति सन्तः ।।४।।

श्रुतिस्मृतिभ्याम्प्रतिपादिता या करे कृता ब्रह्मसुतादिभिश्च ।
वीणा चतुर्वर्गनिदानभूता तत्वेन वेद्या कविभिः प्रयत्नात् ।।५।।

**द्विविधवीणा**

विशुद्धमेलाह्वयिका च मध्यमेलाभिधाना द्विविधेति वीणा ।
समन्त्रिषड्जो यदि पूर्वसंस्थो वीणोर्ध्वगा मुक्तकतन्त्रिकासु ।।६।।

स्याच्छुद्धमेला पमयोश्च तद्वदेकैकमुख्यात्खलु मध्यमेला ।
प्रत्येकमेते द्विविधे भवेतां स्याद्रागमेलाऽखिलपूर्विकैका ।।७।।

द्वितीयकैकोपपदा तथैव तत्र प्रवक्ष्याम्यथ लक्षणानि ।
स्थानेषु या मन्द्रपरादिकेषु स्वरैरशेषैः सह वर्तमाना ।।८।।

यदा तदा साऽखिलरागमेलाह्वया निगद्येत चतुर्मुखाद्यैः ।
एकैकरागम्प्रतिमेलनं स्यान्मध्ये च तारे तु यदा स्वराणाम् ।।९।।

एषोपगीयेत तदैकरागमेलाभिधा रागविदां वरिष्ठैः ।
लक्ष्यप्रवीणेन विनिर्मितायां सुवीणिकायामुपरिप्रदेयाः ।।१०।।

---

1. B यत्र ।
2. B श्रया ।

तन्त्र्यश्चतस्रो यम (त) एव पार्श्वेऽधो दक्षिणे तिस्र इमा निबद्ध्याः ।
वेदोदितानामुपरिस्थितानां वामप्रदेशाश्रितपूर्वतन्त्र्याम् ॥११॥

षड्जन्निदध्यादनुमन्द्रसंज्ञं द्वितीयतन्त्र्यामनुमन्द्रपञ्च ।
तृतीयतन्त्र्यामपि मन्द्रषड्जञ्चतुर्थतन्त्र्यामथ मन्द्रमाख्यम् ॥१२॥

त्रितन्त्रिकाणामध आश्रितानामाद्या तु मध्यस्थितषड्जकेन ।
तन्त्री समानश्रुतिरेषितव्या द्वितीयका मन्द्रकपेन तद्वत् ॥१३॥

तृतीयिका मन्द्रकषड्जकेन तिस्रोप्य रू स्युः श्रुतिनामधेयाः ।
सारी निवेशञ्च निरूपयामि यो वैणिकानामभिसम्मतः स्यात् ॥१४॥

आद्यानुमन्द्राह्वयषड्जतन्त्र्या शुद्धो यथा स्यादृषभस्तथाद्या ।
सारी निवेश्येत त था द्वितीया तन्त्र्या यथा शुद्धगसिद्धिहेतोः ॥१५॥

सारी तृतीयाऽपि तथैव तन्त्र्या धीयेत साधारणगस्य सिद्ध्यैः ।
सारी चतुर्थी लघुमध्यमस्य सिद्ध्यै तया तन्त्रिकया तथैव ॥१६॥

तन्त्र्या तया पञ्चमसारिका च निधीयते शुद्धमसाधनाय ।
सारी निवेश्येत तथैव षष्ठी तन्त्र्या तथैवं[1] लघुपोद्गमाय ॥१७॥

अथ त्रितन्त्रीभिरनुक्रमेण पराभिरासू (सा)-दितसारिकासु ।
स्वरान्प्रभूतानभिवर्णयामि येनानुमन्द्रेण समाश्रिता या ॥१८॥

द्वितीयतन्त्र्योज्ज्वलधैवताख्यः शुद्धो निषादाह्वयकः पुरस्तात् ।
स्यात्कैशिकीनिर्लघुषड्जकश्च शुद्धः सनामार्षभको विशुद्धः ॥१९॥

स्वराः प्रभूता इति षड्भवन्ति षट्सूक्तसारीषु यथा क्रमेण ।
द्वितीयतन्त्र्या जनितौ विशुद्धौ सरी प्रयोगे न च रक्षणीयौ ॥२०॥

तृतीयया तन्त्रिकयाऽपि यस्मान्मन्द्रौ विशुद्धौ जनितौ पुनस्तौ ।
एतेऽनुमन्द्राः कथिता मया च मन्द्रस्वरांस्तानधुना ब्रवीमि ॥२१॥

तृतीयया मन्द्रसयुक्ततन्त्र्याऽनुमन्द्रवत्षट्स्वपि सारिकासु ।
भवन्ति तेऽनुक्रमतोऽथ तत्र तृतीयतन्त्र्योज्ज्वलमध्यमश्च ॥२२॥

---

1. B C. तथै वं

लघ्वादिकः पञ्चमकोऽप्रयोगश्चतुर्थतन्त्रीजनितौ पुनर्यत् ।
मन्द्रेण तेनाऽन्वितया चतुर्थ्या तन्त्र्या भवेयुः क्रमशः स्वरास्ते ॥२३॥

सारीषु षट्सु प्रतिपादितासु लघ्वादिकः पञ्चमनामधेयः ।
विशुद्धपो धैवतको विशुद्धः शुद्धो निषादाह्वयकः पुरस्तात् ॥२४॥

स्यात्कैशिकीनिर्लघुषड्जकश्च मन्द्रस्वराः सङ्गदिता मयैते ।
तन्त्रीचतुष्केण पुरोदितासु सारीषु ष सु प्रथिताः स्वरा ये ॥२५॥

सर्वेऽनुमन्द्राह्वयकाश्च मन्द्राः स्वयम्भुवो न स्वधिया निबद्धाः ।
प्रमाणयुक्ताः सकलाः स्वरास्ते नैवाऽन्यथा कश्चन कर्तुमीशः ॥२६॥

हीनाधिकैकश्रुतिवत्स्वरा ये मन्द्राऽनुमन्द्राश्रिततारसंस्थाः ।
न दोषवन्तस्त्वतिदुर्ग्रहस्तदसम्प्रदायाश्रितपण्डितानाम् ॥२७॥

संवादिनौ योजय सर्वतस्तु स्वस्वप्रमाणादिति मध्यतोऽपि ।
तारेऽतितारे च निवेशनीया सार्यो यथायोगमिमाः सुधीभिः ॥२८॥

मध्यादिकस्थानकसारिकासु तुरीयतन्त्रीजनिता ग्रहाख्याः ।
स्वराः प्रयोज्या न तु भिन्नतन्त्रीत्रयोद्भवा गीतविचक्षणेन ॥२९॥

चतुर्दशोक्ता ननु पूर्वमेते स्वरस्ततो द्वादशसङ्ख्यकानाम् ।
सारीनिवेशः क्रियते भवद्भिः कुतोऽन्तरेकाकलिनिर्द्वयोर्न ? ॥३०॥

अत्रोच्यते काकिलनोंऽतरस्य पङ्क्तौ प्रयुज्यौ (प्रयोज्ये) यदि सारिके द्वे ।
सङ्कीर्णभावान्न तदानुकूल्यं स्याद्वादनेऽतो न कृते पृथक्ते ॥३१॥

तयोः समुत्पत्तिरुदीर्यते तु चेत्प्रस्तुतस्तत् सहितोऽस्ति रागः ।
लघ्वाख्ययोः षड्जमयोश्च सार्यौ स्यातां यदकैकश्रुति (ते) र्विहीनः (ने) ॥३२॥

तदा तु काकल्यभिदा-(धा)न्तरौ स्तः किन्त्वत्र सूक्ष्मध्वनिभेदविज्ञाः ।
लघ्वादिकं सं लघुमध्यमञ्च तत्प्रातिनिध्येन वदन्ति लक्ष्ये ॥३३॥

ध्वनेस्तथाल्पत्वविशेषमीक्ष्य निःशङ्कनामा विदुषां वरीयान् ।
जगाद काकल्यभिधोऽन्तरस्तौ स्वल्पप्रयोगाविति सर्वतस्तः ॥३४॥

चतुःश्रुतित्वं रिधयोर्यदेतत्पञ्चश्रुतित्वं त्वथ मध्यमस्य ।
यदा भवेत्प्रस्तुतरागवर्ती तदानुकूल्यात्कुरु यन्त्रसारीम् ॥३५॥

विशुद्धमेला विहितेति वीणा त्वस्याम्प्रभेदत्रयमन्यदस्ति ।
द्वितीयतुर्योर्ध्वगतन्त्रिजन्योः स्याद्वैपरीत्यात्पमयोस्तदेका ॥३६॥

अत्राऽनुमन्द्राह्वयषड्जतन्त्र्यां पमौ त्रिवेद[1]-श्रुतिकावयोगौ ।
पतन्त्रिका मध्यमरञ्जिताऽन्या तत्राऽब्धिरामश्रुतिकौ मपौ स्तः ॥३७॥

संयुक्ततन्त्र्या जनितावयोगौ परः मतन्त्री पयुता तथैव ।
शुद्धौ सरी पञ्चमतन्त्रिकोत्थौ तदा प्रयोगे न च रक्षणीयौ ॥३८॥

उक्ता विशुद्धाह्वयमेलभेदा या मध्यमेला परिलक्ष्यतेऽथ ।
विशुद्धमेलाह्वयवीणिकाया[2]-मेवोपरिष्टाद्गततन्त्रिकासु ॥३९॥

आद्याऽनुमन्द्राह्वयपञ्चमेन युता द्वितीया यदि मन्द्रसेन ।
तन्त्री तृतीया त्वथ मन्द्रपेन तुरीयतन्त्री यदि मध्यसेन[3] ॥४०॥

यदोपरिष्टाद्गततुर्यतन्त्र्या पार्श्वत्रितन्त्रीषु समश्रुतित्वम् ।
शुद्धौ सरी पाह्वयतन्त्रिकोत्थौ धीरैः प्रयोगे न च सम्प्रयोज्यौ ॥४१॥

स्यान्मध्यमेलेयमिति प्रयुक्ता किन्त्वत्र भेदः[4] पर एव चाऽस्ति[4] ।
षतन्त्रिकास्थानमयोजिता स्यात्तन्त्र्यब्धिरामश्रुतिकौ मपौ यौ ॥४२॥

सतन्त्रिकायां जनितावयोगौ पार्श्वत्रितन्त्रीश्रुतिताऽपि तद्वत् ।
तुरीयतन्त्रीजनितौ स्वरौ यौ लोप्यौ तु तौ नैव कदाचिदत्र ॥४३॥

नादस्य मन्द्राज्जनिरुक्तपूर्वं स्याद्वैपरीत्येन विपञ्चिकायाम् ।
अथ स्वराणां विकृतिप्रभेदाद्ये[5] रागमेला जनिताः क्रमेण ॥४४॥

---

1. A चतुस्त्रिश्रुतिका
2. A तन्त्रिकाया
3. र. को. मन्द्रसेन (2/53)

4-4. A परतोस्ति चान्यः

5. A. E. ये

सुविस्तरप्रस्तरणाय तेषां युक्तिं सुबोधामुपवर्णयामि ।
**सगौ मपौ निश्च** यथाक्रमेण श्रुतित्रयं यान्ति विकारलघ्वो (लब्धौ) ।।४५।।

पर्यायवृत्या विकृतैश्च तत्र व्यस्तैः समस्तैः प्रभवन्ति भेदाः ।
किन्तु स्वरा ये विकृताश्च लिप्यां वक्रोत्तमाङ्गाः प्रकटीभवेयुः ।।४६।।

**एकविकारे**

षड्जो यदा वैकृतिको भवेद्वा क्रमेण शुच्योर्**निध**योर्विलोपः ।
एवं **गमौ** स्तो **विकृतौ पनौ** च स्वपूर्वशुद्धान्क्रमतस्तु लुम्पेत् ।।४७।।

तथाविधिः (धः)[1] षड्जकपञ्चमोऽर्वाक्श्रुतित्रये द्वित्वमवश्यमेषाम् ।
यदा **समौ** पञ्चमको द्विरुक्ताः क्रमेण न स्यान्निगमद्विरुक्तिः ।।४८।।

यदैव **सन्यो**र्युगपद्विकारे[2] भवेद्ध्रुवं धैवतकस्य लोपः ।

**द्विविकारे**

गमौ विकारे युगपद्यदा तु तदा सदा स्यादृषभस्य लोपः ।।४६।।

समध्यमः पञ्चमको द्विरुक्तो गान्धारको वैकृतिकस्तु यत्र ।
न स्याद्द्विरुक्तिस्तु **ग**नामकस्य तत्रैव लोपस्त्वृषभस्वरस्य ।।५०।।

द्विधा द्विधा षड्जगमान्तिमानां **प**स्य त्रिधा स्यात् क्रमतो विकृत्याम् ।
चतुर्भिदाः स्युः **सग**योर्विकारे तथा चतुर्धा **सम**योर्विकृत्यांम् ।।५१।।

रसप्रभेदाः सपयोश्च तद्वदेकैव (को हि) **सन्योर्गम**योस्तथैकः ।
**गपे** विकृत्यां त्रिन्धा चतुर्धा **गन्यो**र्विकारे **मप**योर्द्विधा च ।।५२।।

**मन्यो**श्चतुर्धा **प**निषादयोः षड् द्विधा विकृत्यां सगमध्यमानाम्
षोढा विकृत्यां **सगप**ञ्चमानां सगान्तिके वैकृतिके द्विधा च ।।५३।।

भिदाश्चतस्रः समपे विकारे द्विधा विकारे समसप्तमेऽपि ।
त्रिधा विकृत्यान्निपषड्जकानामेको विकृत्यांङ्गमपञ्चमानाम् ।।५४।।

---

1. A तत्राविधिः B तत्रावधिः
2. C. D. विकृत्यां

**गमान्तिके** वैकृतिके तथा द्वौ **गपान्तिके** स्युर्विकृतौ च षोढा ।
**मपान्तिके** वैकृतिके चतुर्धा द्विधा विकृत्यां **सगमाख्यपानाम्** ॥५५॥

एको विकारे **सगमान्तिके** च त्रेधा विकृत्यां सगपान्तिकानाम्
द्विधा विकारे समपान्तिके च द्वेधा विकृत्यां गमपान्तिकानाम् ॥५६॥

एवंव पञ्चस्वपि वैकृतेषु भेदा भवेयुः क्रमशश्च सर्वे ।
क्रमेण चैकेकविकारवत्वे रुद्रप्रभेदाः प्रभवन्ति तत्र ॥५७॥

पञ्चाग्निभेदाः द्विविकारतः स्युः पक्षाऽग्निभेदास्त्रिविकारतोऽपि ।
दशप्रभेदास्तु चतुर्विकारादेको भवेत्पञ्चविकारतस्तु ॥५८॥

खाङ्कैः कृता शुद्धसमन्वितानां सङ्ख्या भिदानाम्बुधविठ्ठलेन ।
केचिद्विलुप्ताः कतिचिद्द्विरुक्ताः क्रमे स्वरा ये विकृते शात्तु ॥५९॥
मूलक्रमोच्चारममीषु वक्ति श्रीविठ्ठलः श्रीकरणैकधीरः ॥६०॥

तद्यथा—

स रि ग म प ध नि ध

**इति शुद्धस्वरमेलः**[1]

स रि ग म प नि स(s) १

स रि ग म प नि स(s) २

**इति षड्जविकृतेर्भेदौ**

स रि ग(s) म प ध नि १

स ग ग(s) म प ध नि २

**इति गविकृतेर्भेदौ**

स रि म(s) म प ध नि १

स ग म(s) म प ध नि २

**इति मविकृतेर्भेदौ**

स रि ग प(s) प ध नि १

---

1. मुखारी मेलः

स रि म पंं प ध नि २

स ग म पंं प ध नि ३

इति पविकृतेर्भेदा :

स रि ग म प ध निं १

स रि ग म प नि निं २

इति निविकृतेर्भेदौ

एवं एकैकविकारत्वे रुद्रभेदाः

(द्विविकारतः)

स रि गं म प ध सं १[1]

स ग गं म प ध सं २[2]

स रि गं म प नि सं ३

स ग गं म प नि सं ४

इति सगविकृतेर्भेदा :

स रि मं म प ध सं १[3]

स ग मं म प ध सं २[4]

स रि मं म प नि सं ३

स ग मं म प नि सं ४[5]

---

1. नादरामक्रीमेलः
2. आभीरिकामेलः
3. मालवगौडमेलः
4. हमीरनट्टमेलः
5. केदारमेलः

**इति समविकृतेर्भेदा :**

ऽ ऽ
स रि ग प प ध स १[1]

ऽ ऽ
स रि म प प ध स २

ऽ ऽ
स ग म प प ध स ३

ऽ ऽ
स रि ग प प नि स ४

ऽ ऽ
स रि म प प नि स ५

ऽ ऽ
स ग म प प नि स ६

**इति सपविकृतेर्भेदा :**

ऽ ऽ
स रि ग म प नि स १

**इति सनिविकृतेर्भेद :**

ऽ ऽ
स ग म म प ध नि १

**इति गमविकृतेर्भेद :**

ऽ ऽ
स रि ग प प ध नि १

ऽ ऽ
स ग ग प प ध नि २

ऽ ऽ
स ग म प प ध नि ३

**इति गपविकृतेर्भेदा :**

ऽ ऽ
स रि ग म प ध नि १[1]

ऽ
स ग ग म प ध नि २[2]

---

1. शुद्धवराटीमेलः
2. तोडीमेलः
3. हिन्दोलमेलः

स रि गऽ म प नि निऽ ३

स ग गऽ म प नि निऽ ४

इति गनिविकृतेर्भेदाः

स रि मऽ पऽ प ध नि १

स ग मऽ पऽ प ध नि २

मपविकृतेर्भेदौ :

स रि मऽ म प ध निऽ १[1]

स ग मऽ म प ध निऽ २

स रि मऽ म प नि निऽ ३

स ग मऽ म प नि निऽ ४

इति मनिविकृतेर्भेदाः

स रि ग पऽ प ध निऽ १

स रि म पऽ प ध निऽ २

स ग म पऽ प ध निऽ ३

स रि ग पऽ प नि निऽ ४

स रि म पऽ प नि निऽ ५

स ग म पऽ प नि निऽ ६

---

1. देशाक्षी मेलः

**इति पन्योर्विकारे भेदा :**

इति द्विस्वरविकारत: पञ्चत्रिंशद्भेदा : ।

ऽ ऽ ऽ
स ग म म प ध स १

ऽ ऽ – ऽ
स ग म म प नि स २

**इति गमसविकृतेर्भेदौ**

ऽ ऽ ऽ
स रि ग प प ध स १

ऽ ऽ ऽ
स ग ग प प ध स २

ऽ ऽ ऽ
स ग म प प ध स ३

ऽ ऽ ऽ
स रि ग प प नि स ४

ऽ ऽ ऽ
स ग ग प प नि स ५

ऽ ऽ ऽ
स ग म प प नि स ६

**इति सगपविकृतेर्भेदा :**

ऽ ऽ ऽ
स रि ग म प नि स १

ऽ ऽ ऽ
स ग ग म प नि स २

**इति सगनिविकृतेर्भेदौ**

ऽ ऽ ऽ
स रि म प प ध स १

ऽ ऽ ऽ
स ग म प प ध स २

ऽ ऽ ऽ
स रि म प प नि स ३

ऽ ऽ ऽ
स ग म प प नि स ४

इति समपविकृतेर्भेदाः :

s s s
स रि म म प नि स १

s s s
स ग म म प नि स २

इति समनिविकृतेर्भेदौ

s s s
स रि ग प प नि स १

s s s
स रि म प प नि स २

s s s
स ग म प प नि स ३[1]

इति सपनिविकृतेर्भेदाः :

s s s
स ग म प प ध नि १

इति गमपविकृतेर्भेद :

s s s
स ग म प म ध नि १

s s s
स ग म म प नि नि २[2]

इति गमनिविकृतेर्भेदौ

s s s
स रि ग प प ध नि १[3]

s s s
स ग ग प प ध नि २

s s s
स ग म प प ध नि ३

s s s
स रि ग प प नि नि ४

---

1. सारङ्गमेलः
2. कर्णाटगौडमेलः
3. कामोदमेलः

ऽ ऽ ऽ
स ग ग प प नि नि ५

ऽ ऽ ऽ
स ग म प प नि नि ६

इति गपनिविकृतेर्भेदा :

ऽ ऽ ऽ
स रि म प प ध नि १

ऽ ऽ ऽ
स ग म प प ध नि २

ऽ ऽ ऽ
स रि म प प नि नि ३

ऽ ऽ ऽ
स ग म प प नि नि ४

इति मपनिविकृतेर्भेदा

इति त्रिस्वरविकारतो द्वात्रिंशद्भेदा :

ऽ ऽ ऽ ऽ
स ग म प प ध स १

ऽ ऽ ऽ ऽ
स ग म प प नि स २

इति सगमपविकृतेर्भेदौ

ऽ ऽ ऽ ऽ
स ग म म प नि स १

इति सगमनिविकृतेर्भेद :

ऽ ऽ ऽ ऽ
स रि ग प प नि स १

ऽ ऽ ऽ ऽ
स ग ग प प नि स २

ऽ ऽ ऽ ऽ
स ग म प प नि स ३

इति सगपनिविकृतेर्भेदा :

ऽ ऽ ऽ ऽ
स रि म प प नि स १

ऽ ऽ ऽ ऽ
स ग म प प नि स २

इति समपनिविकृतेर्भेदौ

ऽ ऽ ऽ ऽ
सं ग म प प ध नि १

ऽ ऽ ऽ ऽ
स ग म प प नि नि २

इति गमपनिविकृतेर्भेदौ

इति चतुःस्वरविकारतो दश भेदाः

ऽ ऽ ऽ ऽ ऽ
स ग म प प नि स १

इति सगमपनिविकृतेर्भेदः

इति पञ्चस्वरविकृतेर्भेदः

एवं नवति मेलभेदाः

रागमेल प्रकरणम्

मेलेषु सर्वेष्विहवर्णितेषु ज्ञानाय रागोद्भवनैकहेतून् ।
मेलानिदानीं कतिचिद्वृणोमि पूर्वोक्तलक्ष्मान्वितवीणिकायाम्[1] ॥६१॥

तत्राद्यमेलस्तु मुखारिकायास्ततो भवेन्मालवगौडमेलः ।
श्रीरागमेलस्तदनन्तरं स्याद् स्याच्छुद्धनट्टाह्वयकस्य मेलः ॥६२॥

देशाक्षिकाया अपि मेलकः स्यात् कर्णाटगौडस्य भवेत्सुमेलः ।
केदारकाख्यस्य भवेत्तु मेलो हिञ्जेजमेलोऽपि हमीरमेलः ॥६३॥

कामोदरागाभिधकस्य मेलस्ततस्तुतोड्याह्वयरागमेलः ।
आभीरिकारागगतश्च मेलो मेलो भवेच्छुद्धवराटिकायाः ॥६४॥

स्याच्छुद्धरामक्र्यभिघस्य मेलो देवक्रियायाश्च भवेत्तु मेलः ।
सारङ्गमेलस्तदनन्तरं स्यात् कल्याणमेलोऽपि ततः पुरस्तु ॥६५॥

हिन्दोलरागस्य भवेत्तु मेलः स्यान्नादरामक्र्यभिघस्य मेलः ।
इतीरितास्ते नवचन्द्रसङ्ख्या एवम्परांस्तान्कलयन्तु तज्ज्ञाः ॥६६॥

---

1 नवतिमेलभेदेषु श्रीराग देवक्रियामेलौ नास्तः

I मुखारीमेल :

सप्तस्वरा[1] यत्र भवन्ति शुद्धाः मुखारिकायाः कथितः स मेलः ।

स रि ग म प ध नि ।

मुखारिकामेलसमुद्भवास्तु मुखारिकाद्याः प्रभवन्ति केचित् ॥६७॥

न्यासांशषड्जग्रहसंयुता सा पूर्णा मुखारी क्रियते सदैव ।

इति मुखारीमेल :

II अथ मालवगौडमेल :

शुद्धौ सरी मध्यमपञ्चमौ[2] च शुद्धस्तथा धैवतको यदि स्यात् ॥६८॥

लघ्वादिकौ षड्जकमध्यमौ चेत्तदा भवेन्मालवगौडमेलः ।

स रि म म प ध सा

मेलादतो मालवगौडनामा गौण्डक्रिया गुर्जरिका च टक्कः ॥६९॥

पाडी कुरुञ्जी बहुली च पूर्वी रामक्रिया द्राविडगौडनामा ।

गौडी च बङ्गालकनामधेयस्त्वासावरी[3] पञ्चमरेवगुप्ती ॥७०॥

मञ्जर्यपि स्यात्प्रथमादिरेषा कर्णाटबङ्गालविशुद्धगौडौ ।

स्याच्छुद्धपूर्वो ललितस्तु देवगान्धारको मारविकादयः स्युः ॥७१॥

न्यंशग्रहान्तो रिपवर्जितो वा सायम्भवेन्मालवगौड। एषः ।

इति मालवगौड (i)

[4]सांशग्रहा सान्तयुता धरिक्ता-[4] गीयेत सा गुण्डकृतिः प्रभाते[5] ॥७२॥

इति गौण्डक्री (ii)

न्यंशग्रहान्ता ससमुज्झिता वा स्याद्गुर्जरी प्रातरियं विगेया[6] ।

इति गुर्ज्जरी (iii)

---

1. B. C. E. सप्तस्वरा
2. B.E. शुद्धमपंचमौ च
3. C स्यासावरी

4-4. A मांशग्रहान्ता गनिर्वजिता वा

5. B. विमाते
6. गवेया

सांशग्रहान्तोऽन्तरकाकलीतः पूर्णोऽन्त्ययामे क्रियते हि टक्कः ।।७३।।

इति टक्कः (iv)

सांशान्तिका सग्रहणी गरिक्ता स्यात्पाडिका तूदयमेति सायम् ।

इति पाडिका (v)

सांशान्तिका सग्रहणी कुरुञ्जी धाल्पा प्रयोगे विहिता सदैव ।।७४।।

इति कुरुञ्जी (vi)

मांशग्रहान्ता गनिर्वजिता वाऽन ।। विगेया बहुली पराह्ने ।

इति बहुली (vii)

सांशान्तिका सग्रहिका च पूर्णा स्यात्पूर्विका सा दिनतुर्ययामे ।।७५।।

इति पूर्वी (vii.)

सांशग्रहान्ता मनिर्वजिता च सा स्यात्तु रामक्र्यभिधा सदैव ।

इति रामक्री: (ix)

न्यंशग्रहान्तः सकलस्वरश्च स्फुरत्सपो द्राविडगौडकः स्यात् ।।७६।।

सायन्तनः कैश्चन भाष्यतेऽसौ[1] सालङ्गको वा गुणकर्यपीति ।

इति द्राविडगौडः (सालङ्गः गुणकरी वा) (x)

सांशग्रहा सान्तवती धगाभ्यां रिक्ता दिनान्ते विहिता तु गौडी ।।७७।।

इति गौडी (xi)

सांशग्रहान्तः सकलस्वरश्च सदैव बङ्गालकनामकः स्यात् ।

इति बङ्गालः (xii)

माशग्रहा मान्तवती च पूर्णा त्वासावरी शश्वदसौ नियुक्ता ।।७८।।

इत्यासावरी (xiii)

[2]पांशान्तिकः पग्रहको रिरिक्तोऽसौ पञ्चमः प्रातरुपैति जन्म ।

इति पञ्चमः (xiv)

न्यासांशरी रिग्रहकान्तरेता [3]स्याद्रेवगुप्तिस्त्वसपा दिनान्ते ।।७९।।

इति रेवगुप्तिः (xv)

पांशग्रहन्यासयुता सदैव मञ्जर्युपास्यात् (पान्त्या ?) प्रथमादिरेषा ।

---

1. A कैश्चिदपीरितो
2. E न्यां
3. A विगेया

इति प्रथममञ्जरी (xvi)

गांशग्रहा[1]न्तो रिविर्वजितश्च कर्णाटबङ्गाल उपस्त्युपात्तः ॥८०॥

इति कर्णाटबङ्गालः (xvii)

न्यंशग्रहान्तश्च पवर्जनीयः शुद्धादिको गौड इनास्तशस्तः[2] ।

इति शुद्धगौडः (xviii)

सांशान्तिकः सग्रहकः परिक्तः प्रातस्तु शुद्धो ललिताभिधानः ॥८१॥

इति शुद्धललितः (xix)

सांशग्रहः सान्तयुतश्च पूर्णः स्याद्देवगान्धारक एष नित्यम् ।

इति देवगान्धारः (xx)

सांशग्रहान्ता रिधवर्जिता च निरुप्यते मारविका सदैव ॥८२॥

इति मारविका (xxi)

इति मालवगौडमेलः

**III श्रीरागमेलः[3]**

चतुःश्रुती यत्र रिधौ भवेतां साधारणो गोऽपि च कैशिकोनिः ।
तथा विशुद्धाः समपा भवन्ति श्रीरागकस्याऽभिहितः स मेलः ॥८३॥

s s s s
स रि ग म प ध नि

श्रीरागकोऽस्मादपि मालवश्रीर्धन्नासिका भैरविका तथैव ।
अन्येऽपि रागाः कतिचित्प्रसिद्धा भवन्ति सैन्धव्यभिधादयश्च ॥८४॥
सांशग्रहान्तो धगवर्जितो[4] वा श्रीरागनामाऽस्तमिते रवौ स्यात् ।

इति श्रीरागः (i)

सांशग्रहा सान्तयुता रिधाल्पा पूर्णा सदा राजति मालवश्रीः ॥८५॥

इति मालवश्रीः (ii)

षड्जग्रहान्ता रिधवर्जितेष्टा धन्नासिका सांशवती प्रभाते ।

---

1. A 'सांश' इति मुद्रितपुस्तके
2. A इति प्रशस्तः
3. मेलोऽयं पूर्वोक्तनवतिमेलेषु नोपलभ्यते
4. मुद्रितपुस्तके 'धविवर्जितो वा' इति पाठः

इति धन्नासी (iii)

सांशग्रहान्ता रिपमुद्रिता च पूर्णा सदा भैरविका विगेया ॥८६॥

इति भैरवी (iv)

सांशग्रहान्ता त्वरिपा सदैव स्यात्सैन्धवी सद्गमकैर्लसन्ती ।

इति सैन्धवी (v)

इति श्रीरागमेल :

**iv शुद्धनट्टमेल :**

निगौ यदा त्रिश्रुतिकौ भवेतां लघ्वादिकौ षड्जकमध्यमौ च ॥८७॥

तथा विशुद्धाः समपा भवन्ति विशुद्धनट्टाह्वयकस्य मेलः ।

s s s s
स ग म म प नि स

विशुद्धनट्टाह्वयमेलतोऽपि विशुद्धनट्टप्रमुखा भवन्ति ॥८८॥

सांशग्रहान्तः सकलस्वरश्च स्याच्छुद्धनट्टोऽहनि तुर्ययामे ।

इति शुद्धनट्टः (i)

इति शुद्धनट्टमेल :

**v देशाक्षीमेल :**

लघ्वादिकौ षड्जकमध्यमौ चेद्गान्धारकस्त्रिश्रुतिकस्तथा स्यात् ॥८९॥

शुद्धा भवेयुः समपा निषादो देशाक्षिकाया गदितः स मेलः ।

s s s
स ग म म प नि स

देशाक्षिकामेलसमुद्भवाश्च देशाक्षिकाद्याः कतिचिद्भवन्ति ॥९०॥

गांशग्रहान्तामनिमध्यमां वा देशाक्षिकाम्प्रातरवै (वें?) ! हि पूर्णाम् ।

इति देशाक्षी (i)

इति देशाक्षीमेल :

**vi कर्णाटगौडमेल :**

शुद्धौ समौ पञ्चमकोऽपि शुद्धः शुद्धो निषादो लघुमध्यमश्च ।।६१।।
निगौ यदा त्रिश्रुतिकौ भवेतां कर्णाटगौडस्य तदैष मेलः ।

स ग म म म प नि नी

कर्णाटगौडोऽपि तुरुष्कतोडी विशुद्धबङ्गालकनामधेयः ।।६२।।

छायादिको नट्टकनामधेयः सामन्तकाद्याः प्रभवन्त्यमुष्मात् ।
न्यंशग्रहान्तो रिधवर्जितो वा पूर्णस्तु कर्णाट इनास्तशोभी ।।६३।।

इति कर्णाटः (i)

मांशग्रहा मान्तवती च पूर्णा मध्याहता पञ्चमकम्पयुक्ता ।
सहस्ररश्मेरुदये विरेजे ? (विज्ञेया) तौरुष्कतोडीयमुदीर्यमाणा ।।६४।।

इति तुरुष्कतोडी (ii)

मांशान्तको मग्रहकश्च पूर्णः स्याच्छुद्धबङ्गाल उपस्युपात्तः ।

इति शुद्धबङ्गालः (iii)

षड्जग्रहः सान्तयुतश्च सांशोऽन्तराश्रितः काकलिदीप्यमानः ।।६५।।

छायादिमः सायमसौ विज्ञेयो नट्टाह्वयो गानविचक्षणेन ।

इति छायानट्टः (iv)

षड्जग्रहन्यासयुतश्च पूर्णः षड्जांशयुक्तोऽन्तरकाकलीतः ।।६६।।

प्रयुज्यमानः स दिनान्तकाले[1] चकास्ति सामन्तकनामधेयः ।

इति सामन्तः (v)

इति कर्णाटगौडमेल :

vii केदारमेल :

लघ्वादिकौ षड्जकमध्यमौ च शुद्धौ समौ पञ्चमको विशुद्धः ।।६७।।

निगौ विशुद्धौ च यदा भवन्ति तदा तु केदारकमेल उक्तः ।

स ग म म प नि स

---

1. मुद्रितपुस्तके 'विभातकाले' इति पाठः

केदारनारायणगौडकाख्यौ बेलावली शङ्करभूषणाख्यः ॥९८॥
स्तो नट्टनारायणमध्यमादी मल्हा(ल्ला)रको गोण्डकनामधेयः ।
सालङ्गनट्टाभिधकश्च भूपालिका च सावेर्यभिधानिका या ॥९९॥

सौराष्ट्रिका नाम तथाऽपि चाऽन्ये काम्बोजिकाद्याः प्रभवन्त्यमुष्मात् ।
न्यंशान्तको निग्रहकोऽरिपौ[1] वा केदारकः सायमभीष्ट एषः ॥१००॥

इति केदार : (i)

सांशग्रहो गान्तयुतो रिशून्यः प्रातस्तु नारायणगौडकः स्यात् ।

इति नारायणगौड : (ii)

धांशग्रहान्ता[2]-रिपवर्जिता च बेलावली प्रातरसावभीष्टा ॥१०१॥

इति बेलावली (iii)

षड्जग्रहः सान्तयुतोंऽशषड्जः सप्तस्वरो (रै)मु(मुं) द्रितभूषितश्च ।
सूर्योदयेऽयं समुदीर्यमाणो विराजते शङ्करभूषणाख्यः ॥१०२॥

इति शङ्कराभूषणः (iv)

षड्जग्रहः सान्तयुतोंऽशषड्जोयुतस्तु पूर्णोऽन्तरकाकलीभ्याम् ।
विराजमानः सततन्नियुक्तोऽसौ नट्टनारायणनामधेयः ॥१०३॥

इति नट्टनारायण : (v)

मांशान्तको मग्रहको रिधास्तः प्रातः प्रयुज्येत स मध्यमादिः ।

इति मध्यमादि : (vi)

धांशग्रहो धान्तयुतोऽसपश्च मल्लारनामोषसि गीयतेऽसौ ॥१०४॥

इति मल्लार : (vii)

धांशान्तको धग्रहकश्च पूर्णो विभातकाले स च गोण्डरागः[2] ।

इति गोण्ड :[3] (viii)

सांशग्रहः सान्तयुतश्च पूर्णः सालङ्गनट्टोऽहनि तुर्ययामे ॥१०५॥

इति सालङ्गनट्ट : (ix)

---

1. मुद्रितपुस्तके 'ऽरिधो'
2. C. धाशग्रहा स-
3. A गौडरागः

मांशग्रहान्ता निगवर्जिता च[1] भूपालिका प्रातरसौ विगेया ।

इति भूपाली (x)

धांशग्रहान्ता सपवर्जनीया सावेरिका प्रातरियन्नियोज्या ॥१०६॥

इति सावेरी (xi)

सांशग्रहा सान्तयुता च पूर्णा सौराष्ट्रिका सायमियं विगेया ।

इति सौराष्ट्री (xii)

सांशग्रहा सान्तवती मनिभ्यां समुज्झिता चान्तरकाकलीष्टा ॥१०७॥

काम्बोजिका सा तु विगीयमाना विभातकाले नितरां विभाति ।

इति काम्बोजी (xiii)

इति केदारमेल :

**हिज्जेजमेल :**

शुद्धौ सरी मध्यमपञ्चमौ च विशुद्धधो मो लघुशब्दपूर्वः ॥१०८॥

निः कैशिकी चापि यदा तदा तु हिज्जेजरागस्य हि मेलकः स्यात् ।

स रि म (s) म प ध नि (s)

हिज्जेजमेलात्तु हिजेजकाख्योऽप्यन्ये तथा भैरवकादयस्तु ॥१०९॥

न्यंशग्रहान्तोऽन्तरकाकलीतः पूर्णो हिजेजः क्रियते सदैव ।

इति हिजेजः (i)

धांशग्रहन्यासयुतश्च पूर्णः प्रातः प्रयुज्येत स भैरवाख्यः ॥११०॥

इति भैरव : (ii)

इति हिज्जेजमेल :

**IX हम्मीरनट्टमेल :**

शुद्धौ सगौ मध्यमपञ्चमौ च शुद्धस्तथा धैवतको यदि स्यात् ।

लध्वादिकौ षड्जकमध्यमौ चेत्तदा हमीराह्वयनट्टमेलः ॥१११॥

---

1. B वर्जनीया, A निमवर्जिता सा ?

s s
स ग म म प ध स

हमीरनट्टप्रमुखाद्यरागाः केचित्प्रसिद्धाः प्रभवन्त्यमुष्मात् ।
सांशग्रहान्तोऽह्नि तुर्ययामे पूर्णो भवेन्नट्टहमीरपूर्वः ॥११२॥

इति हमीरनट्ट : (i)
इति हमीरनट्टमेल :

X कामोदमेलः

शुद्धौ पधौ[1] पञ्चमको लघुश्च[1] शुद्धौ सरी[2] त्रिश्रुतिकौ निगौ च
एवं यदा स्यात्स्वरमेलनञ्च तदा हि कामोदकमेल एषः ॥११३॥

s s s
स रि ग प प ध नि

मेलादतो येऽपि विशेषरागाः कामोदकाद्याः प्रकटी भवन्ति ।
षड्जग्रहांशांतविराजमानः कामोदरागो दिवसान्त्ययामे ॥११४॥

इति कामोद :
इति कामोदमेल :

XI तोडीमेल :

शुद्धौ सरी मध्यमपञ्चमौ च शुद्धस्तथा धैवतको यदि स्यात् ।
साधारणो गोऽपि च कैशिकीनिस्तदा तु तोड्याह्वयकस्य मेलः ॥११५॥

s s
स रि ग म प ध नि

तोड्यादयः केचन सिद्धरागा भवन्ति तोडीगतमेलतोऽपि ।
मांशग्रहान्ता पधकम्पयुक्ता तोडी भवेत् प्रातरसौ तु पूर्णा ॥११६॥

इति तोडी (i)
इति तोडीमेल :

---

1-1. J. मध्यमकोऽपि शुद्धः
2. A.C. सवौ

**आभीरिकामेलः XII**

शुद्धौ सपौ शुद्धमधैवतौ च साधारणो गोऽपि विशुद्धगश्च ।
षड्जाभिधानो लघुशब्दपूर्व आभीरिकाया गदितः स मेलः ॥११७॥

स ग गँ म प ध सँ

आभीरिकामेलसमुद्भवा ये आभीरिकाद्याः प्रभवन्ति केचित् ।
षड्जग्रहा सान्तवती च सांशाऽऽभीरी दिनान्ते जनिमेति पूर्णा ॥११८॥

इत्याभीरी (i)

इति आभीरीमेलः

**XIII शुद्धवराटीमेलः**

शुद्धौ सरी शुद्धगपञ्चमौ चेत्तथोज्ज्वलो धैवतनामधेयः ।
लघ्वादिकौ षड्जकपञ्चमौ च मेलस्तदा शुद्धवराटिकायाः ॥११९॥

स रि ग पँ प ध सँ

[1]अतोऽपि शुद्धादिकसमपूर्वे वराटिकेऽन्ये कतिचिद्भवन्ति ।
सांशग्रहा सान्तवती च शुद्धवराटिका केष्येत सदैव पूर्णा ॥१२०॥

इति शुद्धवराटी (i)

षड्जग्रहन्यासवती च सांशा सप्तस्वरा काकिलनोपयाता ।
दिवानिशं राजति गीयमाना तद्वेदिभिः सामवराटिकाऽसौ ॥१२१॥

इति सामवराटी (ii)

इति शुद्धवराटीमेलः

**XIV शुद्धरामक्रियमेलः**

शुद्धौ सरी शुद्धपधैवतौ चेन्मनामधेयो लघुपूर्वकश्च ।
लघ्वादिकौ षड्जकपञ्चमौ चेद् विशुद्धरामक्र्यभिधस्य मेलः ॥१२२॥

स रिँ मँ प प ध सँ

---

1. मुद्रितपुस्तके अंशोऽयं नोपलभ्यते

मेलादमुष्माच्च विशुद्धरामक्रतिस्तथा श्रावणिकाभिधाना ।
देशी विभासो ललितादयोऽपि प्रसिद्धरागाः प्रभवन्ति चाऽन्ये ।।१२३।।

सांशग्रहः सान्तयुतश्च पूर्णो विशुद्धरामक्र्यभिधो दिनस्य ।
मध्यात्परङ्गीयत आख्ययेनं तथा जगुः केचन देशिकारम् ।।१२४।।

इति शुद्धरामक्री (देशिकारो वा)

सांशग्रहा सान्तवती च पूर्णा सा श्रावणी दीव्यति वासरान्ते ।

इति श्रावणी (ii)

न्यासांशरी रिग्रहणी परिक्ता प्रयुज्यते शश्वदसौ च देशी ।।१२५।।

इति देशी (iii)

सांशग्रहान्तः सकल स्वरश्च प्रातः प्रयुज्येत विभासकोऽसौ ।

इति विभासः (iv)

धांश[1]ग्रहान्तो ललितोऽपरोऽसौ सप्तस्वरः प्रातरसौ विगेयः ।।१२६।।

इति ललित :

इति शुद्धरामक्रीमेल :

XV देवक्रीमेल:[2]

शुद्धौ सगौ[3] शुद्धपनी तथैव लघ्वादिकौ षड्जकमध्यमौ[4] च ।
पञ्चश्रुतिर्मश्च यदा भवेत्तु देवक्रियायाः कथितः स मेलः ।।१२७।।

s s .s
स ग म म प नि स

मेलादमुष्मात् कतिचित्तु रागा देवक्रियाद्याः प्रकटी भवन्ति ।
षड्जग्रहः सान्तयुतश्च सांशः समुज्झितः पञ्चमकेन वा स्यात् ।।१२८।।
तुरीययामे दिवसस्य शुद्धवसन्तको देवक्रतिस्तदैव ।

इति देवक्री (i)

इति देवक्रीमेल :

---

1 मुद्रितपुस्तके 'सांशः'
2. मेलोऽयं ग्रन्थकारोक्तनवतिमेलेषु नोपलभ्यते
3 मुद्रितपुस्तके 'समौ'
4. मुद्रितपुस्तके 'षड्जकपञ्चमौ'

XVI सारङ्गमेलः

शुद्धौ सगौ मध्यमपञ्चमौ च लघ्वादिकौ षड्जकपञ्चमौ चेत् ।।१२६।।
निः कैशिकी चाऽपि यदा तदा स्यात्सारङ्गकस्याऽभिहितः स मेलः ।

s s s
स ग म प प नि स

सारङ्गकाद्या जनिता भवेयुरनेन सारङ्गकमेलकेन ।।१३०।।
सांशग्रहः सान्तयुतश्च पूर्णः सारङ्गकः स्यादपराह्णशोभी ।

इति सारङ्गः (i)

इति सारङ्गमेल :

XVII कल्याणमेल :

शुद्धौ सगौ शुद्धपधौ तथैव लघ्वादिकौ षड्जकपञ्चमौ च ।।१३१।।
साधारणो गोऽपि यदा भवेत्तु कल्याणकस्याऽभिहितः स मेलः ।

s s s
स ग ग प प ध स

कल्याणमेलात्प्रथिता भवन्ति कल्याणकाद्याः कतिचित्तु रागाः ।।१३२।।
सांशग्रहः सान्तयुतश्च पूर्णः कल्याणनामोदयमेति सायम् ।

इति कल्याण :

इति कल्याणमेल :

XVIII हिन्दोलमेल :

शुद्धौ सगौ[1] शुद्धमपञ्चमौ च शुद्धस्तथा धैवतको यदि स्यात् ।।१३३।।
गनि तथा त्रिश्रुतिकौ भवेतान्तदा तु हिन्दोलकमेल उक्तः ।

s s
स ग ग म प ध नी

अतोऽपि हिन्दोलवसन्तकौ च केचित्प्रसिद्धाः प्रभवन्ति चाऽन्ये ।।१३४।।
सांशग्रहान्तो रिपवर्जितश्च हिन्दोलकः प्रातरुपैति जन्म ।

---

1. A सरी

इति हिन्दोल : (i)

सांशान्तकः सग्रहकश्च पूर्णो वसन्तनामोषसि गीयतेऽसौ ।।१३५।।

इति वसन्त :

इति हिन्दोलमेल :

XIX नादरामक्रीमेल :

शुद्धौ यदा षड्जकपञ्चमौ च शुद्धौ रिधौ मध्यमकोऽपि शुद्धः ।।१३५।।

साधारणो गो लघुषड्जकश्च स्यान्नादरामक्र्यमिधस्य मेलः ।

s s
स रि ग म प ध स

यो नादरामक्र्यभिधोऽप्यमुष्मादन्ये प्रसिद्धाः प्रभवन्ति केचित् ।।१३६।।

सांशग्रहा सान्तयुता च नादरामक्रिया सायमुशे(दे)ति[1] पूर्णा ।

इति नादरामक्री (i)

इति नादरामक्रीमेल :

लक्ष्माणि रागेष्विति लक्षितानि कियन्त्यनुक्तानि विमृश्य दध्यात्
।।१३७।।

न्यासग्रहांशेषु च पूर्णतायामथ श्रुतौ षाडवकौडुवेपि ।

सर्वत्र देशीगतरागवृन्दे श्रीमद्धनूमान्नियमं न वव्रे ।।१३८।।

रागाः शिवेन त्रिविधाः प्रयुक्ताः शुद्धाश्च सालंगककास्तथैव ।

सङ्कीर्णकाश्चेति यदैव शुद्धो योऽनन्ययुक्तोऽप्यतिरञ्जकः स्यात्
।।१३९।।

सालङ्गकश्चाऽन्यजरक्तियुक्तः सङ्कीर्णकस्तूभयरक्तिहेतुः ।

ध्वनेर्विशेषः (षैः) स्वरवर्णभेदैर्विभूषितो यो जनरञ्जकः स्यात्
।।१४०।।

रागो हि धीरैर्गदितोऽप्यनेकाद् रौढ्याश्च देशस्वरनामकाः स्युः ।

[2]यद्रागयावत्स्वररूपतानास्तदन्तरुत्थस्वरसूक्ष्मतानाः ।।१४१।।

क्रमात्स्वरैकैकविहीन भूताः सर्वे भवन्त्यत्र हि रागरागे[2] ।

रागे तु सप्तस्वरके भवन्ति पूर्वोदिताः सक्रमकूटतानाः ।।१४२।।

---

1. A यन्ति

2-2. अंशोऽयं मुद्रितपुस्तके नोपलभ्यते

नवाङ्कबिन्द्वग्नि[1]-सचन्द्रसङ्ख्या रागे मत : षाडवतोऽपि तानाः ।
षड्रन्ध्रवस्विन्दुमिताश्च[2] तानाः स्युरौडुवे मार्गणपक्षरामाः ॥१४३॥?

[3]सकलसुरमयी श्रीरुद्रवीणाप्रभेदं[3]
स्वरवररचना सद्रागमेलप्रकारम्[4] ।
सुललितगतिनानारागलक्ष्मादिकञ्च
नरवरबुरहानः स्पष्टमेवं करोति ॥१४४॥

इति श्रीकर्णाटजातीयपंडरीकविठ्ठलविरचिते सद्रागचन्द्रोदये
स्वरमेलप्रसादो द्वितीयः

---

1. 'नवाङ्कऋत्वग्निसचन्द्रसंख्या'.
2. 'षट्पञ्चरन्ध्रेन्दुमिताश्च'
3-3. सकलस्वरमयं श्रीरुद्रवीणाप्रकारे
4. प्रभेदं

तृतीयः प्रसादः

# अथ गमकालप्तिप्रकरणम्

## गमकः

कम्पः स्वरे स्याद्गमको जनानामानन्दकस्तस्य गदामि भेदान् ।
तत्राऽऽदिमः स्यात् तिरपाभिधानस्ततः परं स्यात्स्फुरिताह्वयश्च ॥१॥

स्यात्कम्पितो लीनकनामधेयश्चान्दोलितश्चाऽपि वलिस्त्रिभिन्नः ।
ततः पुरस्तात्कुरलाऽहताख्यावुल्लासितप्लावितहुम्फिताश्च ॥२॥

ततः परम्मुद्रितनामितौ च मिश्रश्च ते स्युः शरचन्द्रसङ्ख्याः ।
लघ्विष्ठकोच्चारमितो भवेद्यो ध्वानस्य कम्पानुकृतेर्मनोज्ञः ॥३॥

द्रुतस्य तुर्यांशकवेगयुक्तः सोऽयम्प्रतीतस्तिरपाभिधानः ।
तृतीयकांशप्रमितो द्रुतस्य वेगात्प्रदिष्टः स्फुरिताह्वयश्च ॥४॥

द्रुतार्धमानात्तु यदा[1] प्रयुक्तो यः कम्पिताख्यो गमकः प्रसिद्धः ।
लीनस्तु स स्याद्द्रुतमानवेगादान्दोलितः स्याल्लघुवेगतोऽपि ॥५॥

अनेकवक्रत्वयुतस्स्वरातः प्रयुज्यमानो वलिरेष उक्तः ।
त्रिस्थानविश्रान्तिविवर्जितो यस्त्रिभिन्ननामा निबिडस्वरश्च ॥६॥

चेद्ग्रन्थिलः कण्ठमृदुर्भवेच्चेत्तदा[2] बलिः स्यात्कुरलाभिधानः ।
परान्परांस्तु क्रमतः स्वरान्यो व्रजेत्तमुल्लासितमामनन्ति ॥७॥

स्वरन्निहत्याऽग्रगतन्निवृत्तो निगद्यते चाऽऽहतनामधेयः ।
यत्कम्पनं स्यात् प्लुतनाम वेगात् तं प्लावितन्नाम वदन्ति तज्ज्ञाः ॥८॥

---

1. A जववान्
2. A जव

यः स्याद्गभीरो हृदयङ्गमश्च हुङ्कारको हुम्फितनामयुक्तः ।
मुखस्य सम्मुद्रणसम्भवो यो विधीयते मुद्रितकः स्वरज्ञैः[1] ।।९।।

स्यान्नामितोऽसौ नमनात्स्वराणामेतद्भिदामिश्रणतोऽपि मिश्रः ।
मिश्रस्य भेदा बहवो भवन्ति न वर्णिता विस्तरकातरेण ।।१०।।

इति गमकभेदाः

**स्थायाः**

स्थायास्तु रागावयवाश्च सप्त त्वेते भवेयुर्भजनाश्रितास्तु ।
ह.तो मताः स्थापनिकोपयाता गतिस्थिताः शब्दसमाश्रिताश्च ।।११।।

ढालाश्रिता वाहनिकास्थि[2]-ताश्च छायागताश्चेत्यथ लक्षणानि ।
विशिष्टमाधानमतिप्रयत्नाद्रागस्य चोक्तः भजनं तदा स्यात् ।।१२।।

स्थाया भवेयुर्भजनाश्रितास्ते संस्थाप्य संस्थाप्य कृतिस्तु येषाम्[3] ।
लक्ष्ये तु रम्यानुपदं सुधीभिः स्थाया मताः स्थापनिकोपयाताः ।।१३।।

गतिस्तु गीतास्यविलासयुक्ता गजेन्द्रवत् तत्सहिता गतिस्थाः ।
स्निग्धत्वमाधुर्यसुमांसलाश्च ये मुक्तशब्दैः परिगृह्यमाणाः ।।१४।।

स्थायास्तु ते शब्दगता भवन्ति ढालस्तु मुक्ताफलवत्प्रचारः ।
विलुण्ठनात्मा सहिता ह्यनेन स्थाया मता ढालसमाश्रितास्ते ।।१५।।

आरोहिगम्वाऽप्यवरोहिसंस्थं सञ्चारिनिष्ठं स्थिरकम्पनं यत्[4]
सा गीयते वाहनिका तु तज्ज्ञैस्तदन्विता वाहनिकास्थिताः[5] स्युः ।।१६।।

छाया तु षोढा स्वररागरागान्तरोत्थिता देशसमुद्भवाश्च ।
क्षेत्रोद्भवा यन्त्र समुत्थितेति (ताश्च) तल्लक्षणानि क्रमतो ब्रवीमि।। १७।।

---

1. A कः स्वरः स्यात्
2. A श्रि०
3. A तेषां
4. A च
5. A श्रिताः

न्यूनाधिकत्वेन यदा श्रुतीनां स्वरान्तरा स्यात् स्वरसम्भवा सा ।
छाया तु रागस्य निजैव या स्याद्रागोद्भवान्तान्निगदन्ति धीराः ॥१८॥

रागे तु रागान्तरवद्भवेद्या गीयेत रागान्तरसम्भवा सा ।
देशस्वभावादुदयम्प्रपन्ना रागे भवेद्देशसमुद्भवा च ॥१९॥

वपुस्त्विवति क्षेत्रमुदीर्यते तु क्षेत्रोद्भवा क्षेत्रसमुत्थिता स्यात् ।
या यन्त्र वंशादिसमुद्भवा च निगद्यते यन्त्रसमुत्थिताऽसौ ॥२०॥

स्थाया अमूभिः सहितास्तु गीताच्छायाश्रिता गीतविशेषविज्ञैः ।

इति स्थायभेदाः

**आलप्तिः**

या वर्णकालङ्करणैः प्रपन्ना स्थायैः सुकम्पैरतिचित्रिता च ॥२१॥

मनोहरा स्याद्बहुभङ्गिभेदैरालप्तिरुच्येत तदा मुनीन्द्रैः ।
यत्र ग्रहन्यासकयोश्च मन्द्रापन्यासतारौडुवषाडवानाम् ॥२२॥

पूर्णस्य मध्यांशकयोर्विवेको रागस्य चालाप इति प्रगीतः[1] ।
रूपप्रकाशीकरणन्तयोश्च तदेव रागालपनं वदन्ति ॥२३॥

सा तु द्विधा रागनिबद्धकाभ्यां विशेषणाद्वच्मि तयोः प्रभेदम् ।
या वर्तते वस्त्वनपेक्ष्यरागालप्तिर्निजस्थानचतुष्टयेन ॥२४॥

यत्र स्वरे रागनिवेशनं स्यात् स्थायीति नाम्ना मुनिभिः प्रणीतः ।
द्व्यर्द्धस्तु तस्माद्गदितस्तुरीयः स्यादष्टमस्तू द्विगुणाभिधानः ॥२५॥

ये पञ्चमः षष्ठकसप्तमौ चेत्त्वर्धस्थिता इत्यभिधानतः स्युः ।
स्थायिस्वरादूर्ध्वगचालनेन द्व्यर्धादधो वर्तनिचालनाच्च ॥२६॥

स्थाय्यन्तभूतो मुखचाल एषः स्वस्थानकन्तत्प्रथमं वदन्ति ।
द्व्यर्द्धस्वरे चालनतस्तदेव स्वस्थानकन्तत्प्रथितन्द्वितीयम् ॥२७॥

अर्धस्थिते चालनतस्तृतीयं सञ्चालनाच्च द्विगुणञ्चतुर्थम् ।
स्वस्थानकैस्तैरिति सर्वरागालप्तिर्मता गानविशारदानाम् ॥२८॥

---

1 B. प्रसिद्धः

### विदारी

यदा पृथग्भूतविदारिकः स्यादालापकण्ठाय इति प्रसिद्धः ।
तालेन रागेण च वस्तुगेन निबद्धकालप्तिरियम्भवेद्या ।।२९।।

सा तु प्रतिग्राहणिका तथाऽन्या प्रभञ्जनीति द्विविधा भवेच्च ।
आलप्तिका स्थायममुं विधाय निबद्धकस्यावयवान् गृहीत्वा[1] ।।३०।।

यदा प्रतिग्राहणिका तदा स्यात्प्रभञ्जनी द्वैधमितीति वच्मि ।
विदारिकाभागपदैर्यदिष्टैः स्थायस्थितिः स्याच्च निबद्धकेऽपि ।।३१।।

नानाप्रकारः क्रियते तदाऽसौ तज्ज्ञैर्मता[2] स्थायकभञ्जनी सा[3] ।
तेन प्रमाणेन च तैः पदैर्या त्वन्यैः प्रकारैरखिलन्निबद्धम् ।।३२।।

गायेत्तदासावनिबद्धपूर्वा स्याद्भञ्जनी सज्जनरञ्जनाय ।
आमन्दमन्दं[4] त्वधिकप्रसन्नैः स्थायैश्च सूक्ष्मैर्बहुभङ्गिभिश्च ।।३३।।

जीवस्वरव्याप्तिपरैस्तु पूर्वं रागस्य संस्थापनिका क्रियेत ।

इत्यालप्तिप्रकरणम्

अथ वादनानि

अथो पुरा लक्षितवीणिकायां सर्वेषु देशीगतवस्तु तेषु ।।३४।।
रागेषु केषाञ्चन वादनानि मुग्धावबोधार्थमुदीरयामि ।

### मध्यमादिः

मन्द्राश्रितो मध्यगतोऽपि मश्चेत् स्थायी विधीयेत परांस्ततस्त्रीन् ।।३५।।

आरुह्य पन्याह्वयषड्जकाख्यान्पञ्चावरुह्य क्रमतस्तु षड्जात् ।
स्थायिस्वरान्तानुपहन्यतेऽधः स्वस्थानमाद्यं त्विति मध्यमादेः ।।३६।।

द्व्यर्द्धाख्यमर्धस्थितनामधेयमारुह्य तद्वद्द्विगुणाभिधानम् ।
आद्यन्निजस्थानकमभ्युपैति स्वस्थानकानान्त्रितयम्परं स्यात् ।।३७।।

---

1. B गृहीता
2. B.C.D. न्यादिर्यमः
3. BCD स्यात्
4. आमोदमन्दे

स्वरं समारोहति च क्रमेण स्यात्सर्वरागेषु विधानमेतत् ।

इति मध्यमादिः

**मालवगौडः**

मन्द्रस्थितान्निग्रहतः प्रयुज्य परन्ततः प्राप्य तृतीयतुर्यौ ॥३८॥
उपेत्य च स्थायितृतीयकञ्च स्थायिस्वरात्तुर्यमथ प्रपद्य ।
ततः स्वरानप्यवरुह्य पञ्च स्थायिस्वराऽधस्तनतुर्यमेत्य ॥३९॥
कृत्वा ततः स्थायिपुरस्थितञ्च गत्वा स्वरं स्थायिनमग्रगन्तु ।
स्थायिस्वरात्तूर्यमथ प्रपद्य ग्रहस्वरादग्रगतं विहाय ॥४०॥
न्यासो विधीयेत यदा ग्रहाख्ये तदा भवेन्मालवगौडनामा ।

इति मालवगौडः

**बहुली**

कृत्वा ग्रहं प्राक्स्थतृतीयको वाऽऽरुह्याऽथ पूर्वस्थितवत्तुरीयम् ॥४१॥
प्रकम्प्य तस्मात्परमेत्य दध्याद्ग्रहे विमुक्तिं बहुली तदा स्यात्[1] ।

इति बहुली

चेद्धैवतं स्थायितया प्रपद्य ततस्तृतीयञ्च चतुर्थकञ्च ॥४२॥
स्थायिस्वरान्तानवरुह्य तत्राऽधोवर्तमानन्तु तृतीय[2]-मेत्य ।
स्थायिस्वरं याति यदा तदानीं रागो भवेद्भैरवनामधेयः ॥४३॥

इति भैरवः

**श्रीरागः**

षड्जं विधाय द्विगुणं ग्रहाख्यमधस्तनं स्थायिनमप्युपेत्य ।
द्वितीयकन्तुर्यमथ प्रयुज्य द्वितीयकं स्थायिनमास्पृशेच्च ॥४४॥
नीते विलम्बित्वमपि द्वितीये श्रीरागकः स्थायिविमोचनात्स्यात् ।

इति श्रीरागः

---

1. मुद्रितपुस्तके पाठोऽयं नोपलभ्यते
2. मुद्रितपुस्तके तुरीय इति पाठः

### धन्नासी

मध्यस्थषड्जग्रहतस्तृतीयं यदा समाश्रित्य चतुर्थकन्तु ।।४५।।

उक्त्वा द्वितीयन्तु तृतीयकञ्च स्पृष्ट्वा स्वरौ तुर्यकपञ्चमौ च ।
एतत्क्रमेणाऽप्यवरोह इष्टः स्थायिद्वितीयञ्च विनापि तुर्यम्[1] ।।४६।।

ततस्तृतीयं समुदीर्य मुक्तिर्ग्रहे तु धन्नास्यभिधः प्रसिद्धयेत् ।[2]

इति धन्नासी

### मल्हारः

चेद्धैवतं स्थायिपरं विलम्ब्य स्पृष्ट्वा ग्रहाख्यञ्च तथा द्वितीयम् ।।४७।।

ईषत्विलम्ब्य ग्रहपूर्वसंस्थन्तृतीयमारुह्य तथा ग्रहाद्यौ ।
स्वरौ (रं)तृतीयं सुविलम्ब्य तस्याऽधस्थग्रहात् स्पर्शनमात्रतस्त्रीन्।।४८।।

आरुह्य संस्पृश्य तथा ग्रहाख्यं स्वरन्द्वितीयं समुपेत्य कुर्यात् ।
ग्रहाभिधाने न्यसनन्तदानीमुदेति[3] मल्हारकनामधेयः ।।४६।।

इति मल्हारः

### वसन्तः

मध्यस्थसं स्थायितया विधाय समेत्य तस्मादधरस्वरौ च ।
स्थायिस्वरान्त्रीनपि वादयित्वाऽऽरोहेण[4] चैतानवरुह्य तद्वत् ।।५०।।

ग्रहस्वरेंऽतः क्रियते यदा तु तदोपजायेत वसन्तनामा ।

इति वसन्तः

### वराटी

सस्थायिनम्पूर्वगतं स्वरञ्चेद्गत्वा समारोहति पञ्च तस्मात् ।।५१।।
तुर्यन्द्वितीयन्द्विरुदीर्य मुक्तिः स्थायिन्युपेयाज्जननं वराटी ।

इति वराटी

---

1. A विधायतुयम्
2. A प्रसिद्धः
3. A मुपेत्य
4. A वेगेन

### शुद्धरामक्री:

मध्यस्थषड्जग्रहपूर्वभूतं कृत्वा परौ तुर्यमथो विलम्ब्य ॥५२॥
द्वितीयमास्पृश्य तथा तृतीयं मुक्तौ ग्रहे रामकृतिर्विशुद्धा ।

इति शुद्धरामक्री:

इति वादनानि

रागाः कियन्तः कथिता मयैवं निबन्धतानुग्रहमर्मकेषु ॥५३॥
मद्बोधतोऽधीतसुरागतायां[1] सिद्धिं सुधीराः प्रतिपादयेयुः ।

नरपतिबुरहानो रागविद्याविवेकी
गमकगतिकभेद[2]-स्थायकाऽलप्तिभेदम्[3] ।
सकलजनविपञ्चीरागबाद्यप्रकारं[4] ।
गुणिजनमवबोद्धुञ्चात्र योग्यं करोति ॥५४॥

इति श्रीविठ्ठलादिष्टः प्रसादत्रयसुन्दरः ।
रागचन्द्रोदयो भाति जनाज्ञानतमोहरः ॥५५॥

विद्वज्जनचकोरा ये रागचन्द्रोदयं मम ।
विठ्ठलस्य[5] सुपश्यन्तु नादपीयूषकांक्षिणः ॥५६॥

वरमति[6]-हृदि जाते रागचन्द्रे प्रसन्ने
भ्रमतिमिरविशेषो नाशमायात्यशेषम् ।
इति मनसि विचिन्त्य प्रायशो यः पठेच्चेद्
भवति सकलपृथ्वीरागिणां रागसिद्धिः ॥५७॥

---

1. A.D. ऽबोधितरागतायां
2. A गमकगतिविभेदः
3. A स्थायकानाम्प्रभेदम
4. A काद्यप्रकारम्
5. B विलसंतं
6. A बुधमति

कर्णाटे शैत्रगङ्गाभिधनगनिकटे सातनूराह्वयो[1] यो
ग्रामस्तत्राऽग्रजन्मप्रवरनिकरराट् जामदग्न्योऽस्ति वंशः ।
तत्र श्रीविठ्ठलार्योऽभवदमितयशास्तद्गुणाख्या तु तस्यै–
तत्सूनो रागचन्द्रोदय इति मतिमत्कैरवाणाम्मुदेऽस्तु[2] ।।५८।।

इति श्रीकर्णाटकजातीयपंडरीकविठ्ठलविरचिते
सद्रागचन्द्रोदये आलप्तिप्रसादस्तृतीयः ।

समाप्तोऽयं रागचन्द्रोदयो ग्रन्थः ।।

---

1. सातनूर्वाह्वयो
2. भजन्कैरवाणां मुदे स्तु

## पुण्डरीकविट्ठल-विरचित :

# नर्त्तननिर्णयः

### प्रथमं प्रकरणम्

श्रीगणेशाय नमः

[तत्रादिमं पदार्थसङ्ग्रहाख्यं खण्डम्]

श्रीलक्ष्मीपतिचित्तसम्भवसकृद्भ्रूक्षेपसंज्ञाज्ञया ।
विश्वाकारवती महागुणवती मायानटी नृत्यति ।
तद्ङ्किन्नर्त्तयतीववामन[1]-नृसिंहादिस्वरूपैरलं
तौ वन्देऽखिललोकनाटकमयौ मायाञ्च मायापतिम् ॥१॥

श्रुतिकलितगुरुत्वं सूर्यतः सम्भवत्वं
चतुरुदधिप्रभुत्वं[2] निन्दिताखण्डलत्वम् ।
विकटभटरटत्वं प्राप्त चक्कतसत्त्वं[3]
समररसभरत्वङ्कोन[4] वेत्त्यत्र तत्त्वम् ॥२॥

तत्रासीदुत्तरादौ नृपतिवरखुरासाणकेकाननाथो
युद्धे योधाग्रधीरस्तिमिरपदपुरो लिङ्गनामाभिरामः ।
वैरिक्रूराभ्रवृन्दप्रदलनपवनो वीरसङ्ग्रामभूमौ
षट्त्रिंशच्छस्त्रकाद्यै[5] रिपुतिमिरदलद्भूमिमार्तण्डचण्डः ॥३॥

---

1. Q.R. वाम
2. Q.R. चतुरदधिकप्रभुत्वं
3. Q.R चक्कृतसत्त्वं
4. Q.R. रसरसरभरत्वं
5. Q षट्त्रिंशच्छस्त्राद्यं, R. षट्त्रिंशच्छस्त्र' द्यं ?

तस्मादष्टमकोऽपि बाबर[1]-नृपो जातो धरामण्डले
शूरास्तेन रणाङ्गणे न हि समा दिक्पालभूमीश्वराः[2] ।
तस्माच्छ्रीकुलनन्दनः प्रकटितः सङ्ग्रामसत्केसरी
श्रीहूमाउ[3]महाप्रतापनिकरः पृथ्वीपती राजते ।।४।।

सत्कीर्तिः श्रीसुधावाग्रसमणिनयनः पारिजातास्यहास्यो
लीलालावण्यरम्भो वितरणसुरभिः सज्जनानन्दचन्द्रः ।
दारिद्राद्याद्यवैद्यो[4]भुवि पशुपधनूः[5] क्षीरसिन्धौ हमावा-
वुद्भूतो शर्क्कराभो[6] मनुमणिजगुणैः साकमेकप्रकाशः ।।५।।

नृत्यन्ती पात्ररात्री त्वकब्बरनृपतेर्जन्मकाले शुभेऽस्मिन् ।
भ्राम्यन्ती तिर्यगेव[7] त्रुटितगुणसरः श्रीकरः कण्ठमालः ।
लग्नात् सूत्रैककोटेर्विगलितजलजास्तारकामण्डला या
दृश्यन्ते[8] व्योम्नि सूत्रं करिवरपदवीनायकः पूर्णचन्द्रः ।।६।।

अकबर[9]-नृपते ते कन्दलीकीर्त्तिमूर्त्ते
हरिहरविधिपुत्री[10] ब्रह्मतारारयस्ते ।
मणिशशिजलजाभा[11] शक्तिधारा छलेन[12]
प्रबलबहुशिरोभिः सन्निधिं[13] वर्धयन्ती ।।७।।

---

1. Q.R बवार
2. Q.R दिक्पालाभमीश्वराः
3. Q श्रीहुमाऊ R. श्रीहमाउ
4. R. दारिद्राद्यातवैधो ?
5. R भ्रुवि॰
6. Q.R. कर्कराजो
7. Q तिर्यगाव
8. Q.R. दिश्यन्ते
9. Q R. अकबनृपते
10. Q R. हरिहरपुत्री
11. Q.R जलभा
12. Q छेलेन, R छेलन
13. Q.R. संघ

गङ्गावाहे हिमाद्रौ हरगिरिविवरे[1] वज्रकुम्भीन्द्रकान्तौ[2]
क्षीराब्धौ पुण्डरीके विकचित-[3]कुसुमे शेषकान्तौ बले च ।
चन्द्रज्योत्स्नासु तारा जलजमणिलसत्[4] सुस्मिते सुन्दरीणां
सत्कीर्त्ती राजते ते त्वकबरनृपते शस्त्रधाराग्रभागे ।।८।।

कोऽयं मध्यमपाण्डवो[5] रविसुतः किं वाऽवतारो हरे-[6]
[7]-धर्म्मः किं खलु पञ्चतत्त्वसहितं ब्रह्म स्वयं क्रीडति-[7] ।
[8]-धर्मः किञ्च नराकृतिः-[8] कलियुगे गोब्रह्मभूरक्षणा-
देकोऽकब्बरकः[9] स्वरूपगणनान्नाम्नाञ्चतुर्विंशतिः[10] ।।९।।

इति जानीमः

करितुरगरथानां कोटिशः श्रीपदाते
र्दलदलनकरा[11] भूरुन्नता निम्नता च ।
फणिफणबहुतुन्दः[12] श्वासरोद्धातिमन्दः
श्वसितलहरिकण्ठात् त्रुट्यते[13] कण्ठमालः[14] ।।१०।।

त्रिभुवनरटिताश्रीर्दुःखिता भूपतीनां
त्वर्कबरचरणाब्जे स्थानलुब्धा[15] स्थितैव

---

1. Q R. हरगिरिवरे
2. R. वज्रीकुंभीद्रकांतौ
3. Q R विचकिल
4. Q.R. जलजमणिसुस्मितो
5. Q R. पाण्डो
6. Q.R. हरेर्द्धम्भः
7-7. Q R. 'खलु नश्व सहिब्रह्म स्वयं क्रीडति
8. Q R. किंच
9. Q.R. कबरक
10. Q.R. विंशतिर्ज्जानीमः
11. Q R. दलदलनरराभू
12. फणिफल
13. Q.R. त्रुटिता
14. Q R. माला
15. Q R. स्था ननु लुब्धा

निश-[1]दिनचकिता ये श्रीविहीनाश्च भूपा–
अकवरचरणान्ते[2] दण्डवत्ते[3] पतन्ति ॥११॥

काशीकाश्मीरकाँची[4]-मरहटमलय-प्रौढकर्णाटलाटै-
र्बङ्गै रङ्गै-[5]कलिङ्गै-[5]र्मरुकुरुतुलछै (कुलजै ?) र्हैव सौरठ्ठठट्ठै[6] ।
राठैर्मेवाडगौडैर्मगधजनपदै[6]-र्द्राविडैरुत्कलाद्यैः[7]
[8]श्रीहीनैर्वै नरेन्द्रै-[8] रकबरनृपतिः सेव्यते डिल्लिपीठे ॥१२॥

नानाचित्रैर्वितानैर्बहुविधरचितैश्चामरैः पुष्पमाल्यै-
[9]र्दीपैर्धूपैः[9] सुगन्धैरतिरुचिरकृतो मण्डपो नृत्यपूर्वः ।
तत्र श्रीरत्नचित्रं कनकविरचितं सिंहपूर्वासनं त-[10]
दध्यास्तेऽ-[11] कब्बरेन्द्रः परिजनसहितो मन्त्रिभिः सानुकूलैः ॥१३॥

वीणावंशमृदङ्गतालहुडुकश्रीकिन्नरीकूर्मिकै-
रन्यैर्वाद्यविशेषकैः कविवरैः साहित्यसङ्गीतिभिः ।
देशीमार्गविचक्षणैर्नटवरैः श्रीगायकैर्वन्दिभि-
स्त्वेतैः सार्द्धं-[12]मकब्बरक्षितिपतिर्नृत्यं[13] वरम्प्रेक्षते ॥१४॥

---

1. Q.R. निशि
2. QR चरणादे
3. Q R· दडवत् ते
4. Q.R. कांती
5. Q.R X कोगै
6. ठट्ठै
7. Q.R. द्राविडो कलिङ्गैरित्याद्यैः
8-8. QR श्रीनरेन्द्रै
9-9. Q R. धूपैः
10. Q R. पूर्वासनं
11. Q.R. दध्यास्या
12. Q सर्व
13. QR क्षितिपतिनृत्यं

नृत्ये चाऽस्मिन् विरोधा[1] बहुतरगतयो लक्ष्यतो लक्ष्मतः किं,
तत्कुर्वन्तु प्रवीणाः कविवरसुजनाः लक्ष्मलक्ष्यैक[2]-वाच्यम् ।
इत्युक्तेऽकब्बरेन्द्रक्षितिपतितिलके पुण्डरीविठ्ठलाख्यो
जीर्णात्सङ्गीतमार्गाद्रचयति सरलं लक्ष्मलक्ष्यैकरूपम्[3] ॥१५॥

भवन्तो विद्वांसस्त्रिभुवनप्रसिद्धाः सुहृदया-
स्त्वतो योग्याः स्युर्मे सदसदकृतन्तत् क्षमयितुम् ।
क्षमं यौष्माकीण-[4]न्त्रिजगति न-वश्चाऽतिकृपया[5]
मम प्रीतया किं वा विरचितमिदं स्वीकुरुत भो ॥१६॥

तूर्यत्रयमयन्नादब्रह्म सङ्गीतमीरितम् ।
गीतन्नादात्मकं वाद्यन्नादव्यक्त्या प्रशस्यते ॥१७॥

तद् द्वयानुगतन्नृत्त्यन्नादाधीनमिदन्त्रयम् ।
यद्वा वाङ्मयकायस्य मुखं सङ्गीतकं स्मृतम् ॥१८॥

तन्नास्ति त्रिषु लोकेषु विना सङ्गीतवर्त्तनम् ।
नादेन व्यज्यते वर्णः पदं वर्णात् पदाद्वचः ॥१९॥

वचसो व्यवहारोऽयं नादाधीनमतो जगत् ।
आहतोऽनाहतश्चेति द्विधा नादो निगद्यते ॥२०॥

तत्राऽनाहतनादन्तु मुनयः समुपासते ।
गुरूपदिष्टमार्गेण मुक्तिदो नहि रञ्जनः ॥२१॥

आहतस्तु प्रसिद्धः स्याद्रञ्जनो भुक्तिमुक्तिदः ।
सोऽपि किन्तु प्रयोगाय श्रुत्यादिद्वारतो भवेत् ॥२२॥

न नादात्परतरं रम्यं न नादात्परतरं सुखम् ।
न नादात्परतरन्ध्यानन्नास्ति नादात् परः परः ॥२३॥

---

1. Q वरोधा, R वरोबा
2. QR लक्ष्मलक्ष्मैक
3. QR लक्ष्मलक्ष्मैक०
4. Q यौष्माकीदा R यौष्मकंदा
5 QR नवस्त्वतिकृपया

गोपीपतिरनन्तोऽपि वंशध्वनिवशङ्गतः ।
सामगीति[1] रतो ब्रह्मा वीणाऽऽसक्ता सरस्वती ।।२४।।

कण्ठशृङ्गो महारुद्रः कम्वलाश्वतरश्रुतिः ।
किमन्ये यक्षगन्धर्वदेवदानवमानवाः ।।२५।।

अज्ञातविषयास्वादो वालः पर्यङ्किकातले ।
रुदन् गीतामृतम्पीत्वा[2] हर्षोत्कर्षम्प्रपद्यते ।।२६।।

वनेचरस्तृणाहारश्चित्रं[3] मृगशिशुः पशुः ।
लुब्धो लुब्धकसङ्गीते गीते यच्छति[4] जीवितम् ।।२७।।

वल्मीकस्थो महासर्पो नादलुब्धोऽपि वध्यते ।
नादाब्धेस्तु परं पारन्न जानाति सरस्वती ।।२८।।

तस्मात्सङ्गीतमाहाऽऽत्म्यं के प्रशंसितुमीशते
वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं स गच्छति ।।२९।।

इति याज्ञवल्क्यः[5]

वीणागाथिनौ ब्राह्मणौ गायेतामिति अश्वमेधप्रकरणे वेदे च[6] ।
दण्डे रमेशोऽत्र तदीय भार्या तन्त्र्याम्महेशः ककुभेऽप्युमा स्यात् ।
पत्र्यान्तु तुम्बे कथितो विधाता नाभौ सरस्वत्यपि दोरके तु ।।३०।।

नागेश्वरः शीतकरश्च जीवे सार्या प्रदिष्टो दिवसाधिनाथः ।
तथाश्विनौ कीलयुगे तु मेरौ देवाधिपो देत्रमयीति वीणा ।।३१।।

---

1. QR सामगीत, सं.र. सामगीति
2. QR गीतमृतं
3. चिरं, सं र. चित्रं
4. QR गच्छति, सं र. यच्छति
5. इति याज्ञवल्क्यः स्मृतेः (3/4/115)
6. कल्लिनाथटीकात उद्धृतः, सं.र.I पृ. 96

नरम्महापातकिनं[1] पुनाति द्रष्टा (दृष्टा ?) तदा हस्तगता पुनः किम् ।
यस्मात् कपालिप्रियताम्प्रपन्ना तद्रुद्रवीणां कथयन्ति सन्तः ।।३१।।
श्रुतिस्मृतिभ्याम्प्रतिपादिता या करे कृता ब्रह्मसुतादिभिश्च ।
वीणाचतुर्वर्गनिदानभूता तत्त्वेन वेद्या कविभिः प्रयत्नात् ।।३३।।

इति रागचन्द्रोदये[2]

ज्ञातुकामोऽधिकारी च मोक्षस्तत्र प्रयोजनम् ।
प्रतिपाद्य मन्त्रानन्दो ग्रन्थस्तु प्रतिपादकः ।।३४।।

परम्पराकारणतः कार्यनिर्णयता यथा ।।[3]

[इति प्रथमे तालधर्तृप्रकरणे
पदार्थसङ्ग्रहाख्यमादिमं खण्डम्]

---

1. QR महापातकीं
2. सद्रागचन्द्रोदये 2/2-5
3. उपर्युक्तानि पञ्चत्रिंशत् पद्यानि Q एवम् R ग्रन्थयोरेवोपलभ्यन्ते

# अथतालधर्त्तृप्रकरणे

## द्वितीयं खण्डम्

।। श्री गणेशाय नमः ।।

ईशं यतिलयोपेतं वर्णभेदैरुपाश्रितम् ।
रासक्रीडामयन्नत्वा वक्ष्ये नर्तननिर्णयम् ।।१।।

तस्योपकारकाश्चैते तालधर्त्तृ-मृदङ्गिणौ ।
गायको नर्तकः पश्चात् नाटकादिकलक्षणम्[1] ।।२।।

इति पञ्च क्रमात्तत्र[2] तावत्तालधरम्ब्रुवे ।
लक्ष्यलक्षणसम्पन्नो गुणवान् प्रतिभापटुः ।।३।।

सुगीतवाद्यनृत्यस्थः[3] कालज्ञस्तालधर्त्तृकः ।
तालधर्त्तृगुणाः पाटवाद्यमुख्याक्षराणि च ।।४।।

अलङ्काराश्च कविता तथैव दशसञ्चकाः ।
स्थानकानि ततस्तालवादनं स्तुतिशब्दकाः ।।५।।

गजराख्यस्ततस्त्वोता व्यापकश्रुतिभूषणः ।
पाटचालिस्ततो रुद्रभूषणः पञ्चधातुकः ।।६।।

सूडक्रमश्च यत्यादिप्रबन्धाश्च प्रहेलिका ।
तालास्तत्साधनान्येषां क्रमाल्लक्ष्म प्रचक्ष्महे ।।७।।

सुरूपत्वं सुरेखत्वम्पाटज्ञत्वं विनीतता ।
उद्घट्टनपटुत्वञ्च[4] त्रिवर्णव्यक्तिता[5] तथा ।।८।।

---

1. F.L. Q.R. साष्टकं नाटकादिकम्
2. एतानि पञ्च क्रमशः
3. P नृत्तस्थः
4. पाटाक्षरोच्चारणमुद्घट्टनम् (सम्पादकः)
5. त्रिवर्णैः = शुद्ध-कूट-मिश्रैस्त्रिविधैर्वर्णैः

यतितालललयज्ञत्वं समादिग्रहवेदिता ।
मधुरोद्धतपाटेषु विज्ञत्वं हस्तलाघवम् ॥९॥

ग्रहमोक्षविवेकित्वं वर्णसँवादिता तथा ।
दशसञ्चसुविज्ञत्वं श्रमित्वं सावधानता ॥१०॥

देशीतालेष्वभिज्ञत्वं रञ्जकत्वं सभाजयः ।
गुणस्तालधरस्यैते दोषः स्यात्तद्विपर्ययः ॥११॥

इति तालधर्त्तृगुणाः

अथ पाटस्थाद्यवर्णाः

ङवर्जितकवर्गश्च टतवर्गौ रहौ मलौ ।
जभावविति च वर्णानां विंशतिः पाटकर्त्तृकाः[1] ॥१२॥

**पाटलक्षणम्**

संयोगविप्रयोगाभ्यां क्रमव्युत्क्रमयोगतः ।
सस्वरत्वास्वरत्वाभ्यां पाटास्ते स्युरनेकधा ॥१३॥

शुद्धाश्च तं धि थों ठे नें हें देमित्यत्र केवलाः ।
सस्वरैरस्वरैर्युक्तै रयुक्तैर्वा कखादिभिः[2] ॥१४॥

व्यापकाख्यविशेषैश्च कूटाख्याः शुद्धतो विना ।
कूटमिश्राश्च ते शुद्धा बुधैः खण्डाभिधा मताः ॥१५॥

इति पाटाः

वाद्यप्रधानाक्षराणि

उक्तविंशतिवर्णानामुत्करः पाटसंज्ञितः ।
पाटानां रचना वाद्य तत्प्रधानाक्षरं यथा[3] ॥१६॥

---

1. P.W. संज्ञकाः
2. P वरणादिभिः
3. P व्रुवे

पटहे दं मृदङ्गे थों घडसे गुं घटे तु घुं ।
दवे ढें ढिञ्च ढक्कायां हुडुक्कायान्तु झें भवेत् ॥१७॥

दुन्दुभौ धों धलां भेर्यां डमुं डमरुके ततः ।
रुञ्जौ रुं डुं [1]च डक्कायां डक्कुल्यां तुं च कन्दुरे[2] ? ॥१८॥

थुङ्कारमथ तुम्बक्यां थडिं निस्साणके घडाम्[3] ।
सेल्लुके धिं त्रिवल्यां दों घनताले तकस्ततः ॥१९॥

करटायान्तु टेमेवम्प्रधानाक्षरयोजना ।
शेषाः साधारणाः पाटाः सर्ववाद्ये यथोचिताः ॥२०॥

अन्येऽपि वाद्यविधयोऽप्यूह्यन्तामधुनामुना ।

इति वाद्यप्रधानाक्षराणि ॥

**अलङ्काराः**

पाटानां वर्णवैचित्र्यन्यासोऽलङ्कार उच्यते ॥२१॥

समश्च विषमश्चक्रवालश्च ग्रहमुक्तकः ।
मुक्तग्रहाभिधो वर्धमानको हीयमानकः ॥२२॥

ततश्चन्द्रकलानामा शृङ्खलश्च गतागतः ।
अर्धप्रत्यागतो रूपरञ्जकश्चित्रनामकः ॥२३॥

इति त्रयोदशाऽमीषां क्रमाल्लक्ष्माण्यथ ब्रुवे ।
स्यादत्र युक्तवर्णानां सङ्ख्या केवलवर्णतः ॥२४॥

वर्णानां समसङ्ख्यो यः[4] यति पाटः समाह्वयः ।

---

1. Q.R. डं
2. Q कंबुरे सं.र. कुडुवा ?
3. W, Q.R. घडां
4. Q. त्यः

[1]-ततः धिकितक० ढेंगिनकिण झें०-[1] इति समः ।
तद्वद्विषमसङ्ख्यो यः[2] प्रोक्तोऽसौ विषमाभिधः ।।२५।।
झें[3] किट झें[3] किटकुकुझें[3] । इति विषम :

यदा पाटाक्षरव्रातः पूर्वंपूर्वाश्रितो भवेत् ।
अन्त्याक्षरचयस्तर्हि चक्रवालाह्वयो भवेत् ।।२६।।

किटतकधिकिट[4]० तटगिनधिमिधिमि तटगिन० इति चक्रवालः ।

यत्र पाटाऽऽद्यवर्णाश्च पाटान्ते स प्रयोजितः ।
ग्रहमुक्तकनामा स्यात्
थों दिदांतकधिमिथों० किटकिटखिरटकि ।

इति ग्रहमुक्तक :

तदा मुक्तग्रहस्त्वसौ ।।२७।।
पाटस्यान्त्याक्षरं यत्र परपाटादिमम्भवेत् ।
थोंगिन थोंगिन तकथों था[5] थोंगतकिट[6]
तथोंगधिथा धाकिटकिटतक थों ।

इति मुक्तग्रह :

क्रमात्पाटाक्षरैकैकवृद्धिः स्याद्वर्धमानकः ।।२८।।
झों-[7] त० झेंतगके०[8] तगकेंझें०[9] इति वर्धमानः ।

स एव हीयमानः स्याद्विपरीतक्रमो यदा ।
किटकुकुथा० किणंगुकै०[10] किणझेंधि थाधी[11]

---

1-1. W. तदधिकितक० डेंगिनिकिणझें
2. Q.R. सङ्ख्योत्थः
3. Q.W झें
4. P.Q. किटतकतधिकिट
5. P. तकथों
6. Q टिक
7. P.Q. झें
8. Q तगझें
9. Q तकझें झें
10. Q किणझें
11. Q धि

इति हीयमान :

यदा पाटाक्षरैकादिवृद्धिः स्यात्षोडशावधि ॥२६॥

क्रमादन्त्यान्त्यहीनाच्च भवेच्चन्द्रकलाभिधः ।

था० तथा० तझें०[1]था० तुकुझें झें०[2] किणंगुत झें० एवं १६-
धलांगथा०[3] तझें था० धिधाधिं[4] ॥ इति चन्द्रकला ॥
पाटमध्यस्थवर्णोऽन्यपाटादौ चेत्स शृङ्खलः ॥३०॥
तकिट तधिमिकि०[5] धितगथो०[6] तकझेणकिट० किणझेधकिट[7]

इति शृङ्खल :

क्रमाद्वर्णाः पुरोयाताः प्रत्या (प्रान्त्य ?) याता गतागतः ।
किटकिटकि[8] तटकिटत[9] झेंत झेंत झें[10] । इति गतागत :
अर्धप्रत्यागतः स स्यादर्धमागत्य चेद्गतः ॥३१॥

तधिकिटरटकिटरट०[11] किडदगझें कुकुझें० झें कुकुझेंजककु तक-[12]
कुकुकुत[13] इति अर्धप्रत्यागत : ॥
स्वेच्छा[14] कृतैश्च पाटैर्यो रञ्जको रूपरञ्जकः ।
धिमितधिमिधिमि० धमत धम धम० रिखिरत[15]

---

1. W. झें
2. W कुकुझेंझें, Q तकुझेंझें एवं 16.
3. P. धलगथा
4. P. धिथाधी
5. Q तधिकिभि
6. Q मिधितगथो
7. PQ किणझेणकिट
8. Q किटकिटकिट
9. Q तटकिटतझें
10. Q तझेतझें
11. W तधिकिटरट-किकिटरट
12. W झें कुकुझेजककुकुकुत।
13. W. अशोऽयं न दृश्यते
14. Q & R स्वस्था
15. धम धम खेरत, P.O. खिरत

किट[1] कुकुट[2] किणझें ।। इति रूपरञ्जकः ।।
मिश्रितास्ते त्वलङ्कारास्तदा चित्राह्वयो भवेत् ।।३२।।
किडदग था०[3] थोंगिनगिनगथों०[4] तजेहिकुतकिट किए हकुझें

।। इति चित्र :
इत्यलङ्कारा :
प्रबन्धावयवा :

एतेभ्यो धातवो बद्धाः प्रबन्धावयवाः स्मृताः ।
उद्ग्राहः प्रथमो भागो मेलापश्च द्वितीयकः ।।३३।।

तृतीयस्तु ध्रुव : प्रोक्तश्चतुर्थोऽन्तर उच्यते ।
आभोगः पञ्चमश्चेति तेषां लक्षणमुच्यते ।।३४।।

आदौ वाद्यप्रबन्धानां शुद्धकूटादिनिर्मितः ।
यः खण्डो वाद्यते प्राहुरुद्ग्राहन्तं विपश्चितः ।।३५।।

आदावुद्गृह्यते पाटो येनोद्ग्राहस्ततो भवेत् ।
टीपिकूटैकपाटाभ्यामभ्यस्तश्चाऽल्पखण्डकः ।।३६।।

तद्धीमित्यन्ततोबद्ध उद्ग्राहो ध्रुबमेलनात् ।
स मेलापक इत्युक्तो धातुभेदविचक्षणैः ।।३७।।

वर्णानां टिरिकीत्येषामावृत्तिष्टीपिरुच्यते ।
स शुद्धभिन्न[5]वाद्यैश्च बद्धः स्यादुच्चखण्डकः ।।३८।।

सर्वत्र लोपराहित्याद् ध्रुव इत्यभिधीयते ।
शुद्धकूटनिबद्धो यः खण्डो धीगन्तवानपि ।।३९।।

ध्रुवाऽऽभोगान्तरस्थत्वादन्तरः कथितो बुधैः ।
कूटखण्डनिबद्धः स्याच्छण्डणो वाद्यमोक्षकः ।।४०।।

1. P केट
2. PW कुकुत
3. P.Q R.W. थों
4. Q थों गिगिन गिनग थों0
5. E भूरि

आभोग इति विख्यातः प्रबन्धाऽऽपूरणत्वतः ।
छन्दसा भूरिहृद्दोषं[1] स्फूर्तिमूर्तिरुदारधीः ।।४१।।

कविः करोति काव्यं यच्छ्रवणोत्सवदैः पदैः ।
येभ्यः केभ्यश्च तालेभ्यो वर्णत्रयमनोहरान् ।।४२।।

विधाय वादको वाद्यप्रबन्धान् बद्धुमर्हति ।
एनङ्कवित्वकाराख्यवादकम्ब्रुवते जनाः ।।४३।।

इति कविता

तालद्वयमिथो रक्तिसञ्चार ।ऽत्र उच्यते ।
तं लक्ष्यज्ञा विजानन्ति साधका एव नाऽपरे ।।४४।।

कल्पश्चित्रोऽद्दरो दिगिदिगिश्चैवार्धकत्तरी ।
कर्त्तर्य्युरुटुदद्दाख्या झेङ्कृतिश्चावधानकः ।।४५।।

कल्पोद्भवाः पाटवर्णास्तेतेंत्तेथैं[2]त्वितीरिताः ।
चित्रे तु तक्किडा इति वर्णा गिडदगाः परे ।।४६।।

पाटा धिरगिडाश्च स्युरद्दरे सूरिसम्मताः ।
वर्णा दिगिदिगोत्येते प्रोक्ता दिगिदिगौ बुधैः ।।४७।।

अर्धकर्त्तरिकायान्तु तकावृत्तिर्मता सताम् ।
तृतीयतुर्यसञ्चाभ्यां कर्त्तरी कथिता बुधैः ।।४८।।

उरटा[3] चाथ[4] सम्भूता वर्णा धिरिगिडा इति ।
दद्दद्देति दद्दे स्यात् झेङ्कृतौ झेमिति स्मृतः ।।४६।।
अवधाने खिरीवर्णौ बह्वावृत्तिकरौ स्मृतौ ।

इति दशसञ्चकाः

संहतं[5] समपादञ्च वैशाखं वैष्णवन्ततः ।।५०।।

---

1. सं.र. भूरिहृद्येन इति पाठ. 6/1037
2. W तें ते
3. W.P. उरुटा
4. P वथ
5. L सहृतं

चतुरस्रन्तथाऽऽलीढं प्रत्यालीढमिति क्रमात् ।
सप्तस्थानानि सर्वत्र भवेयुस्तालधारिणाम् ॥५१॥

इति स्थानकानि

कांस्योद्भवौ महाशुभ्रौ वर्त्तुलौ शक्तिशङ्करौ ।
न्यूनाधिकनिनादाढ्यौ[1] निर्मितौ विश्वकर्मणा ॥५२॥

हस्तमात्रसुकौशेय रज्जुस्थौ स्निग्धनादकौ ।
वामदक्षिणहस्ताभ्यान्तालौ रसिकरञ्जकौ ॥५३॥

धृत्वा रालकपित्थाभ्यां वादनानि प्रकाशयेत् ।
तथा तालद्वयोर्मध्ये तत्रैकन्तिर्यगाननम् ॥५४॥

कृत्वा तस्याग्रभागेन मध्यमन्यस्य ताडयेत् ।
[2]-शिवेन ताडयेच्छक्तिं न तु शक्त्या शिवं क्वचित् ॥५५॥

अल्पनादंभवेच्छक्तिर्भूरिनादं शिवो भवेत्-[2] ।
वामेन धारयेच्छक्तिं शिवन्दक्षिणपाणिना ॥५६॥
अश्वमेघफलञ्चैव प्राप्नुयाद्दोषमन्यथा ।

इति तालस्तुतिः

यत्र पाटाक्षरैः सार्थैः स्तुतिङ्कुर्वन्ति पण्डिताः[3] ॥५७॥
देवतानान्नृपाणां वा स्तुतिशब्दोऽभिधीयते ।

इति स्तुतिशब्दः

**वाद्यप्रबन्धाः**

कृत्वैकवारमुद्ग्राहन्नातिदीर्घो न चाल्पकः ॥५८॥

वादकोद्घोषगम्भीरध्वनिमुच्चतरन्दधत् ।
त्रिखण्डोऽभ्यस्यते कूटैर्बद्धश्चोपशमाभिधः ॥५९॥

---

1. L निनादौ द्वौ
2-2. L. पाठोऽयं नोपलभ्यते
3. Q देवताः

शुद्धकूटादिभिर्बद्धः सुकुमाराक्षरान्वितः ।
अल्पकोमलनादाढ्यो भवेन्मुहुस्ततः परम् ॥६०॥
कूटादिवद्धखण्डः स्याच्छण्डणो यत्र रज्यते ।
गजराख्यो भवेदन्ये जगुरालापचालिकाम् ॥६१॥
आलापवत् पाटमालां केवलामूचिरे परे ।
गजरावयवाः सर्वे वाद्यन्ते ये निरन्तराः ॥६२॥
वाद्यभेदाश्रिताः सर्वे प्रबन्धाः गजरादयः ।

॥ इति गजर : ॥

द्विरुद्ग्राहस्ततः खण्डं यस्यां द्विर्भूरिवाद्यकम् ॥६३॥
तत्किञ्चिदधिकं वारे द्वितीयेऽथ तृतीयकम् ।
कियद्दीर्घं सकृतच्च कैश्चित्पाटैर्विमिश्रितम् ॥६४॥
प्रयोक्तव्यन्ततः खण्डन्दीर्घवर्णसरात्मकम् ।
ततोऽल्पम्बहुपाटाढ्यन्ततोन्ते छण्डणो भवेत् ॥६५॥
उद्धतो ध्वनिरत्र स्यात्प्रायो मानं विलम्बितम् ।
ऊत्ता (ओता) सोक्ता परे प्राहुश्चालिकाङ्खण्डपूर्विकाम् ॥६६॥

इति ऊत्ता (ओता) ।

भिन्नभिन्नसवाद्यांश्च दशखण्डान्विधाय तु ।
शेखराख्यो भवेद्वाद्यो रञ्जको भिन्नपाटकः ॥६७॥
एष पाटस्तु खण्डानां दशनामन्ततो भवेत् ।
विलम्बितलयोऽप्यत्र ततो मध्यलयात्मकौ ॥६८॥
यमलाभिधकौ खण्डौ स्यातां द्वौ भिन्नवाद्यकौ ।
पूर्ववच्चैतयोरन्ते शेखरं सम्प्रयोजयेत् ॥६९॥
ततः प्राग्दशखण्डानां प्राक्प्राग्भागञ्चतुर्थकम् ।
प्रत्येकन्तु द्विरभ्यस्तं सकृद्वा पुनरुद्धरेत् ॥७०॥
शेखरन्त्वन्ततो युञ्ज्यात् पूर्ववन्मध्यमो लयः ।
कलशाख्यन्ततः खण्डं शुद्धपाटविमिश्रितम् ॥७१॥

धीगन्तम्भूरिवादा[1] ढ्यङ्कुर्याद्द्रुतलयात्मकम् ।
सर्वत्र स्वेप्सितस्ताल एक एव प्रकीर्तितः ॥७२॥

तदैनम्मुनयः प्राहुर्व्यापकश्रुतिभूषणम् ।
ताण्डिकाव्याप्तिमित्याहुः किञ्चिल्लक्षणहीनतः ॥७३॥

इति व्यापकश्रुतिभूषण :

पाटवर्णा यदाऽष्टादित्र्यन्ताः संवादिनो युताः ।
षट्खण्डकाः स्युरत्रैकमेकं प्रत्येकविंशतिः ॥७४॥

तत्तत्सङ्ख्यात्मिका वर्णमालावैचित्र्यसंयुताः ।
नानावाद्यान्विता रासतालयुक्ता भवेत्ततः ॥७५॥

अनेकवाद्यसम्पन्नो बहुरक्तिविचित्रतः ।
कलशश्चञ्चरीयुक्तः स्याच्च ताम्पाटचालिकाम् ॥७६॥

पण्डरीविठ्ठलः[2] प्राह शब्दचालीम्परेऽपि च ।

इति पाटचालि :

यदा पृथक् पृथक् वाद्यान् नवखण्डान् सरञ्जकान् ॥७७॥

नातिह्रस्वान्न दीर्घांच कृत्वा सम्यक् ततः परम् ।
ह्रस्वखण्डम्पृथग्वाद्यं रक्तं यत्पल्लवाभिधम् ॥७८॥

एनन्तु प्रतिखण्डान्ते योजयेच्च ततः परम् ।
विचित्रवाद्यसम्पन्नं दीर्घं कलशखण्डकम् ॥७९॥

अन्ते कुर्यात्तदा प्राहुर्मुनयो रुद्रभूषणम् ।
तमेव ताण्डिकां[3] सर्वे दलश्रृङ्गारकञ्जगुः ॥८०॥

स्रोतोवहा यतिश्चात्र तालस्तु स्वेप्सितो मतः ।

इति रुद्रभूषण :

उद्ग्राहादिक्रमेणैव पञ्चखण्डान् पृथक् पृथक् ॥८१॥

---

1. Q वाद्याढ्य
2. V.W. पंडरीकादयः
3. W. काः

बद्ध्वा तु स्वेप्सया तालः स्यात्तदा पञ्चधातुकः ।
इममेवोचिरे केचित् कडेकह्वितिनामतः ॥८२॥

इति पञ्चधातुकः

इति वाद्यप्रबन्धाः

**सूडक्रमः**

ध्रुवको मण्ठकश्चैव रूपको झम्पकस्तथा ।
त्रिवडश्चाड्डुतालाख्य एकतालीति च क्रमात् ॥८३॥

सप्तसूडादिरित्युक्ताः लक्ष्यलक्षणकोविदैः ।
नगणेन विरामेण ध्रुवकः स्यात्ततः परे ॥८४॥

मण्ठादयो यथानाम तालकाः परिकीर्तिताः ।
मेलापवर्जिताश्चैते सार्वधात्वेकखण्डकाः ॥८५॥
कूटपाटादिभिर्बद्धाः ध्रुवकाद्या भवन्ति हि ।

इति सूडक्रमः

कूटपाटैरेकरूपैः रचितोऽत्यन्तकोमलः ॥८६॥

विरामैर्बहुभिस्तालच्छन्दोभिर्व्यञ्जनोज्वलैः ।
यो वाद्यते तदा तज्ज्ञैर्यतिरित्यभिधीयते ॥८७॥

नृत्ये गीतप्रबन्धे वा क्वापि त्वङ्गतया यदा ।
तद्विदो वादयन्त्येनां वदन्त्युटवणन्तदा ॥८८॥

अन्ये पिलुमुरुम्प्राहुस्थौङ्कारान्त्यप्रधानतः ।
अल्पत्वे तु पिलुमुरू मध्यत्वे कैमुरू मतः ॥८९॥

अत्यन्तप्रौढतायुक्तः कलासो यमलखण्डभाक् ।
यदा तथगदैर्हीन बद्धोऽसौ तीवटिर्भवेत् ॥९०॥

अन्येऽपि बहवो भेदाः प्रबन्धाः स्वेच्छया कृताः ।
तत्तत्तालाभिधाः सर्वेऽनन्तास्तेप्यूह्यन्ताम्बुधैः ॥९१॥

इति यत्यादिप्रबन्धाः

## प्रहेलिका

प्रस्तुतम्पिहितं यत्रान्यप्रकाशः प्रहेलिका ।
तस्याश्च त्रिविधा भेदाः कुवाडः कौचटस्तथा ॥९२॥

अवधानस्ततस्तेषां क्रमाल्लक्षणमुच्यते ।
युगपद् द्व्यादितालानाम्मेलनङ्कामनावधि ॥९३॥

तुल्यमात्राः स्वरूपान्ताः समानग्रहमोक्षकाः ।
लयभेदेन[1] वा वृत्त्या तुल्यमात्रत्वमिष्यते ॥९४॥

इत्थम्प्रञ्चितैर्भेदैस्तूर्यत्रयविशारदैः ।
गानञ्च वादनन्नृत्यं[2] क्रियते स कुवाडकः ॥९५॥

तालपिण्डा[3]खिलान्बिन्दूनूर्ध्वमूर्द्धं लिखेत् क्रमात् ।
तत्रेष्टानेकतालानाम्प्रस्तारो युगपद्यथा ॥९६॥

द्रुतस्यैकं लघोर्बिन्दू गुरोर्बिन्दु चतुष्टयम् ।
द्रुतषट्कं प्लुतस्येति वर्जनीयम्प्रयत्नतः ॥९७॥

लयादावृत्तिभेदाद्वा कुर्यात् कालस्य साम्यताम् ।
रेखां वा स्वस्वरूपं वा विलिखेत्तत्र कालवित् ॥९८॥

समकालो ग्रहे मुक्तौ क्वचिद्ग्रहे न दृश्यते ।
तत्सम्प्रदायो विज्ञेयो[4] वैठ्लः क्वाड[5] ईदृशः ॥९९॥

द्व्यादिवाद्यप्रबन्धानाञ्छित्त्वा पाटान् पृथक्पृथक् ।
वेणीवन्मेलयेद्यत्र यथेष्टं कौचटस्तु सः ॥१००॥

एवं गीतप्रबन्धेषु किन्त्वन्यार्थप्रकाशनम् ।
तत्तत्तालं परित्यज्य भिन्नतालं समाश्रयेत् ॥१०१॥

---

1. L लक्ष्यभेदेन
2. L नृत्तं
3. Q तालखठा ?
4. QR वक्तव्यः
5. QR क्वाडप्रस्तार

तदा भिन्नप्रबन्धः स्याद्गीतकौचट उच्यते ।
गीतवाद्यप्रबन्धा ये तालाश्च स्वेच्छया कृताः ॥१०२॥

व्यत्यासाभ्यासिता वृत्तेः समस्तव्यस्तयोगतः ।
यदा प्रयोजितास्तज्ज्ञैः कराङ्घ्रिवदनेषु च ॥१०३॥
तदाऽवधान इत्युक्तो लक्ष्यलक्षणकोविदैः ।

इति प्रहेलिका

**ताल :**

गीतादिकमिति लादेर्मितया क्रियया मितः ॥१०४॥

दधत्कालस्तु तालोऽसौ **मार्गदेशीस्थितेर्द्विधा** ।

**मार्गम्**

द्रुहिणेन यदन्विष्टम्प्रयुक्तम्भरतेन च ॥१०५॥
महादेवस्य पुरतस्तन्मार्गाख्यं विमुक्तिदम् ।

**देशी**

देशे देशे जनानां यद्रुच्या हृदयरञ्जकम् ॥१०६॥
गानञ्च वादनन्नृत्तं तद्देशीत्यभिधीयते ।

**मार्गताला :**

मार्गतालास्तु पञ्चैव ते च चच्चत्पुटाह्वयः ॥१०७॥

ततश्चाचपुटोद्घट्टौ षट्पितापुत्रकस्तथा ।
सम्यक्वेष्टाक इत्येषां स्वरूपन्नामगैर्गलैः ॥१०८॥

चच्चत्पुटे विशेषोऽत्र प्लुतान्तत्वेन दृश्यते ।
षट् पितापुत्रके चैव सम्यक्वेष्टाकनाम्नि च ॥१०९॥

तयोरपि विशेषोऽस्ति प्लुताद्यन्ततया स्फुटम् ।
आद्यवर्णैः पातकला भरतः पर्यभाषत ॥११०॥
चच्चत्पुटे संशताशं[1] प्रयोक्तव्या यथाक्रमम् ।

---

1. संनिपात शम्या ताल शम्या ज्ञातव्याः । प्रथमे गुरौ संनिपातः, द्वितीये गुरौशम्या, लघुनितालः; प्लुते शम्या ॥ (सं.) (सु. 5/27–28)

ऽ ऽ । ऽ́

यद्वा शताश्शता तालः शम्या वा द्विर्भवेदिह ॥१११॥

ऽ ऽ । ऽ́ ऽऽ ।ऽ́

श ता श ता ताश ताश[1]

अन्यद्भेदद्वयञ्चाचपुटेऽप्यस्ति मुनेर्मतम् ।

ऽ । । ऽ ऽ। ऽ।

श ता श ता । ताश तास[2]

उद्धट्टे तु सनिष्क्रामं शम्याद्वन्द्वञ्च योजयेत् ॥११२॥

ऽ ऽ ऽ

नि श श[3]

सं ता श ता श ता योज्याः षट्पितापुत्रकेऽपि च ।

सं ता श ता श ता

ऽ́ । ऽ ऽ । ऽ́[4]

सम्यक्वेष्टाकके कलाः षट्पितापुत्रकोदिताः ॥११३॥[5]

संनिपातस्तु नास्त्यत्राऽन्ये भेदा नोपयोगिनः ।

**देशीताला :**

देशीतालास्तु भूयांसो लक्ष्मवर्त्मसमाश्रिताः ॥११४॥

अप्रसिद्धाः प्रसिद्धा वाप्यूहनीया विचक्षणैः ।
कलाऽशब्दा सशब्दा च सशब्दाऽशब्दिका क्वचित् ॥११५॥

मात्रांशन्यूनताधिक्ये त्वादिमध्यान्ततो ग्रहः ।
तद्वन्न्यासोऽपि तालानां देश्यान्नैव प्रदुष्यते ॥११६॥

---

1. पक्षान्तरम्-प्रथमगुरौशम्या, द्वितीयगुरौ तालः, लघुनि शम्या प्लुते तालः अथवा यथाक्षरे चच्चत्पुटे प्रथमगुरौ ताल।, द्वितीयगुरौ शम्या, लघुनि ताल।, प्लुते शम्या॥
2. एको भेदः शता शता, ताशतासेति द्वितीय।
3. प्रथमे गुरौ निष्क्रामः तदन्ते गुरुद्वये शम्या
4. प्रथमलुप्ते संनिपातः, लघुमि तालः, गुरुद्वन्द्वे शम्याताली क्रमात्; लघुनि शम्या, प्लुते च तालः
5. ता श ता श ता
ऽ́ ऽ ऽ ऽ ऽ́

इदं रक्तिमयं शास्त्रन्देशी रक्तिमयी यतः ।
तस्माद्देश्यां विरुद्धं यल्लक्षणं स्यात्तदन्यथा ।।११७।।

देशीतालानां पञ्चजातयः

चतुरस्रत्र्यस्रमिश्राः सङ्कीर्णः खण्डकस्तथा ।
देशीगतेषु तालेषु विज्ञेयाः पञ्च जातयः ।।११८।।

चतुरस्रोऽष्टमात्रः स्यात् त्र्यस्रः षाण्मात्रिकस्तथा ।
मिश्रः स्यान्मनुमात्रस्तु द्वैगुण्यादि स्वयोनिवत् ।।११९।।

एकैकमात्रिकाधिक्यात् त्रयः सङ्कीर्णनामकाः ।
एभ्यो विसदृशास्ताला: खण्डाख्यास्ते प्रकीर्तिताः ।।१२०।।

अर्धमात्रा द्रुतो मात्रा त्रितयं प्लुत उच्यते ।
द्रुतादिरचनाभेदात्तालभेदोऽप्यनेकधा ।।१२१।।
द्रुताद्याद्याक्षरैर्ज्ञेयं सन्ति संज्ञान्तराण्यपि ।

द्रुतम्

अर्धमात्रन्तथा व्योम व्यञ्जनं बिन्दुकन्द्रुते ।।१२२।।

लघुः

लघुनि व्यापकं ह्रस्वं मात्रिकं सरलन्तथा ।

गुरुः

द्विमात्रञ्च कला वक्रं दीर्घं गुरुणि कीर्तितम् ।।१२३।।

प्लुतः

प्लुते त्र्यङ्कं त्रिमात्रञ्च दीप्तं सोमोद्भवन्तथा ।

लिपयः

द्रुते विन्दुर्विरामान्ते तूक्ता मात्रायुता लिपिः ।।१२४।।

द्रुतलघ्वन्तयोरेव विरामोऽन्यत्र न क्वचित् ।
ल्पुते मात्रायुतो वक्रो लिपी[1] द्रुतलयें द्रुते[1] (?) ।।१२५।।

---

1-1. अस्पष्टार्थोऽयं श्लोकः । सम्भाव्यते चात्राऽस्माच्छ्लोकात्पूर्वं पद्यानामभावः— अणुद्रुतलघुगुरूणां लक्षणाऽदर्शनात् । (सं.)

प्रये.जितो मतो लिप्यामर्धचन्द्राकृतिर्द्रुतः (?)
देशी प्रसिद्धतालानां केषाञ्चिल्लक्षणम्ब्रुवे ।।१२६।।

आदितालो ब्रह्मतालोऽर्जुनाख्यो यतिशेखरः ।
द्वितीयश्चाड्डुतालाख्य. सन्नितालश्चसम्भ्रमः ।।१२७।।

समः शरभराजाख्यश्चित्रः क्रीडा च कम्बुकः ।
चच्चरीमल्लिकामोदौ जगद्विजयविभ्रमौ ।।१२८।।

विचित्रो पडवतू राजवल्लभो नागराजकः ।
एकताली तृतीयश्च प्रतिमण्ठोऽथ रूपकः ।।१२९।।

कुण्डनाचिर्महासंनि झम्पा हेमातपत्रकः ।
पुरन्दरभ्रमरकौ मण्डनाख्यश्च पङ्कजः ।।१३०।।

त्रिगुणः सुन्दराख्यश्च विश्वसम्भवचन्द्रकौ ।
गारुगिर्गजलीलाख्यश्चण्डतालाभिधो रतिः ।।१३१।।

यतिमध्याह्वयः कङ्कयुगराजौ धनञ्जयः ।
मयूरमृगराजाख्यौ विकङ्को मकरभ्रमः ।।१३२।।

अतिरूपश्चन्द्रकला रङ्गोद्योतोऽथ वर्णाकः ।
वीरविक्रमसिंहौ च राजचूडामणिस्ततः ।।१३३।।

रङ्गः श्रीरङ्गकरुणाहयलीलाश्च पञ्चमः ।
जगद्रञ्जकमण्ठौ च लक्ष्मीकल्याणकुम्भकाः ।।१३४।।

ततस्त्रिपुटनामा च तथा रायभयङ्करः ।
गजलीलस्तथा चूडामणी रिपुभयङ्करः ।।१३५।।

लघुशेखरच्चाख्यौ ततः स्यात् सिंहनन्दनः ।
सिंहलीलो हंसलीलो ढेङ्की शरभलीलकः ।।१३६।।

कङ्कालः प्रतितालश्च प्रत्यङ्गो विजयो जयः ।
पृथ्वीकुण्डलनामा च त्रिभङ्गिः सिंहविक्रमः ।।१३७।।
पञ्चाषडशीतिरमी ताला उद्दिष्टाश्चाथ लक्षणम् ।

### आदिताल : (रासताल :)

लघुना त्वादितालः स्याल्लोके रासोऽपि गीयते ।।१३८।।

### ब्रह्मताल : (२)

ब्रह्मताले लघुर्द्रौलो दौ लघुर्द्रत्रयं लघुः ।

loloololooo l

### अर्जुन : (३)

अर्जुने दो लघुर्द्रौलो दत्रयं लघु दो लघुः ।।१३९।।

ololooolol

### यतिशेखर : (४)

यतिशेखरताले तु दो लौ[1] दौ लो द्रुतो लघू[2] ।

olloololl

### द्वितीय : (५)

द्वितीये दद्वयं लश्चा

ool

### अड्डताल : (कुडुक्क :) (६)

ड्डुताले दौ लघुद्वयम् ।।१४०।।

इममेव कुडुक्काख्यं तालं केचिद्बभाषिरे ।

ooll[3]

### सन्नितताल : (७)

त्रिद्रुताः लघुदौं लौश्च[4] सन्निताले प्रकीर्तिताः ।।१४१।।

oooloooll[5]

1. Q लो
2. घु: o l o o l o
3. V. o o l (?)
4. L लाश्च
5. Q o o o l o l l

सम्भ्रम : (८)

सम्भ्रमे लौ चतुर्दीलो त्रिद्रुती लश्च दो लघू[1] ।

111ooooloooloIl

सम :

समे लौ दौ विरामान्तौ (९)

11ऽऽ[2]

शरभराज : (१०)

ततः शरभराजके[3] ।।१४२।।

लौ चतुर्दी लघुद्वन्द्वं द्रुतो लौद्वौ द्रुतो लघुः ।

11oooo11o11o1[4]

चित्र : (११)

चित्रे दौ[5] लौ द्रुतो लौ[6] द्वौ दत्रयं लघुदो लघू ।।१४३।।

oo11o11ooo1o11[7]

क्रीडाताल : (१२)

क्रीडा द्रुतौ विरामान्तौ

ऽऽ[8]

कम्बुकताल : (१३)

तथा ताले तु कम्बुके ।

दौ लघू द्वौ द्रुतौ लश्च द्रुतो नश्च द्रुतो लघु : ।।१४४।।

••11••1•111•1

---

1. QR लघुः (?)
2. Q • ऽ ऽ (?), L. ।।•• ऽ (?) V. । • • । (?)
3. Q लीलके
4. Q • • • • । • । • (?)
5. P Q दो
6. Q लो
7. P. •।।•।।•••।•।।
8. L • ऽ

### चच्चरी (१४)

विरामान्तद्रुतद्वन्द्वान्यष्टौ लघु च चच्चरी ।

o δ l o δ l o δ l o δ l o δ l o δ l o δ l o δ l

(o δ o δ o δ o δ o δ- o δ o δ o δ l)

### मल्लिकामोद : (१५)

मल्लिकामोदताले तु लौ द्वौ द्रुतचतुष्टयम् ।।१४५।।

l l o o o o

### जगद्विजय : (१६)

जगद्विजयके ताले दत्रयन्द्वौ लघू दनौ ।

o o o l l o l l l

### विभ्रम : (१७)

ताले विभ्रमसंज्ञे तु द्रुतो लश्च द्रुतो लघुः ।।१४६।।

दौ लश्चतुर्द्रुतीलश्च द्रुतद्वन्द्वं लघुस्तथा ।

o l o l o o l o o o o l o o l

### विचित्रताल : (१८)

विचित्राह्वयताले तु दत्रयञ्च लघुद्वयम् ।।१४७।।

द्रुतो लघुश्चतुर्दो च लघुर्दौ द्वौलघुस्तथा ।

o o o l l o l o o o o l o o l l

### पडवतुस्ताल :

ताले पडवतौ प्रोक्ताः दलौ दौद्वौ लघुस्तथा ।।१४८।।

o l o o l

### राजवल्लभ : (२०)

राजवल्लभताले तु द्रुतो लश्च द्रुतो लघुः ।

द्रुतौ लघुर्द्रुतो लश्च[1] द्रुताल्लत्रितयन्तथा ।।१४९।।

o l o l o o l o l o l l l

---

1. P. द्रुतौ द्वौ लघु दो लश्च

### नागराजताल : (२१)

नागराजाह्वये ताले दलघू च द्रुतौ लघुः ।
द्रुतौ लघुद्रुतौ लश्च[1] द्रुताः पञ्च लघुस्तथा-[1] ॥१५०॥

o l o l o o l o l o o o o o l[2]

### एकताली : (२२)

एकताल्यां द्रुतस्त्वेकः

### तृतीयताल : (अन्तरक्रीडः) (२३)

तृतीयाह्वयतालके ।
त्रिद्रुती स्याद्विरामान्ताऽन्तरक्रीडाऽपि कथ्यते ॥१५१॥

o o ȣ

### प्रतिमण्ठ : (२४)

नगणश्चान्तविरतिः प्रतिमण्ठाह्वयो भवेत् ।

l l f

### रूपक : (यतिलग्नः) (२५)

रूपको दाल्लघुश्चैको यतिलग्नोऽपि गीयते ॥१५२॥

o l

### कुण्डनाचि : (२६)

कुण्डनाचौ तु दो लौद्वौ दनौ दो लौ दलावपि ।

o l l o l l l o l l o l

### महासन्निताल : (२७)

महासन्निस्त्रिदी लौ दो लघु दो[3] लो दनौ तथा ॥१५३॥

o o o l l o l o l o l l l

---

1-1. P. द्रुताल्लत्तृतयन्तथा—
2. P. o l o l o o l o l o l l l; V.Q.—o l o l o o l o l o o o o o ll.
(द्रुता पञ्च लघू तथा)
3. L. दौ

झम्पाताल : (२८)

झम्पाताले विरामान्तन्द्रुतद्वन्द्वं लघुस्तथा ।

o ८ l

हेमातपत्रताल : (२९)

हेमातपत्रके ताले द्रुताल्लघु च दत्रयम् ॥१५४॥

लघुद्वन्द्वं द्रुतश्चैको लत्रयन्दो लघुस्तथा ।

o l o o o l l o l l l o l

पुरन्दरताल : (३०)

द्रुतत्रयं लघुद्वन्द्वन्दलौ द्रुतत्रयं लघुः ॥१५५॥

द्रुतो लघुद्वयञ्चान्ते स्युः पुरन्दरतालके ।

o o o l l o l o o o l o l l

भ्रमरताल : (३१)

दो लौ दो लौ दलौ दो नो भवेद्भ्रमरतालके ॥१५६॥

o l l o l l o l o l l l

मण्डन : (३२)

लघुद्वयञ्चतुर्द्रीलो द्रुतानाञ्च चतुष्टयम् ।

लघुद्रुतद्वयं लश्च मण्डनाभिधतालके ॥१५७॥

l l o o o o l o o o o l o o l

पङ्कज : (३३)

दलौ द्रुतत्रयन्नश्च दोलौ[1] दो लश्च पङ्कजे ।

o l o o o l l l o l l o l

त्रिगुण : (३४)

द्रुतद्वयं लघुद्वन्द्वं लघुर्द्रुतद्वयन्ततः ॥१५८॥

लघ्वोर्मध्ये तु चत्वारो बिन्दवस्त्रिगुणाभिधे ।

o o l l l o o l o o o o l

1. Q लो (o l o o o l l l o l o l)

सुन्दर : (३५)

चतुर्दी नगणो दश्च लघुर्दश्च पुनर्लघुः ॥१५६॥
द्रुतौ द्वौ लो द्रुतौ लश्च सुन्दराभिधतालके ।

o o o o l l l o l o l o o l o o l

विश्वसम्भव : (३६)

द्रुतौ द्वौ नगणो दानां त्रितयञ्च लदौ लघुः ॥१६०॥
द्रुतौ लघुर्द्वं तद्वन्द्वं लघुः स्याद्विश्वसम्भवे ।

o o l l l o o o l o l o o l o o l

चन्द्र : (३७)

चन्द्रे दलौ द्रुतो लौ द्वौ दद्वयं लो दलौ दलौ ॥१६१॥

o l o l l o o l o l o l

गारुगि : (३८)

गारुगिर्गदिता तज्ज्ञैर्विरामान्ता चतुर्द्रुती ।

o ᴗ o 8

गजलीला (३९)

गजलीले विरामान्तमुक्तं लघुचतुष्टयम् ॥१६२॥

। । । f

चण्ड : (४०)

द्रुतत्रयं लघुद्वन्द्वञ्चण्डताले बभाषिरे ।

o o o l l

रति : (४१)

रत्याभिधानके ताले ह्रस्वान्ते वक्रको भवेत् ॥१६३॥

l s

यतिमध्य : (४२)

यतिमध्याभिधे ताले लौ दौ लो दत्रयं लघुः ।
द्रुतो लघुर्द्वं तोलश्च दलौ चान्ते लघुः स्मृतः ॥१६४॥

l l o o l o o o l o l o l o l l

कङ्कः (४३)

द्रुतौ द्वौ नगणः पश्चात् षट्द्रुताश्च ततो लघुः ।
द्रुतो लघू द्रुतो लश्च कङ्कताले बभाषिरे ।।१६५।।

oollloooooololl ol

युगराजकः (४४)

दलौ दलौ लघुर्दौ लो द्रुतौ लो युगराजके ।

olollloolloo l (ololloolool)

धनञ्जयः (४५)

लघुर्द्रुतद्वयन्नश्च दलौ दो लो द्रुतो लघुः ।।१६६।।
लघुद्रुतो लघुश्चान्ते क्रमात्ताले धनञ्जये ।

looll lololollol

मयूरः (४६)

चतुर्दो नो चतुर्दो लोदलौदालौ मयूरके ।।१६७।।

oooollloooololoII

मृगराजः (४७)

मृगराजाभिधे ताले लदौ नश्च द्रुतो लघू ।
चत्वारो विन्दवो लश्च क्रमादेते प्रकीर्तिताः ।।१६८।।

lollloll ooool

विकङ्कः (४८)

विकङ्काभिधके ताले लघुर्दो[1] नगणस्तथा ।
चत्वारो बिन्दवो लश्च द्रुतो लो दत्रयं लघुः ।।१६९।।

lolllooooloIoool

मकरभ्रमः (४९)

लघू द्वौ दद्वयं लश्च द्रुतषट्काल्लदौ लघुः ।
द्रुतत्रितयमन्ते च लघुः स्यान्मकरभ्रमे ।।१७०।।

lloolooooooloIoool

---

1. P. दौ (loolllooooloIoool)

अतिरूपक : (५०)

चतुर्द्री लदला दोलो दोलो दोलोऽति रूपके ।

oooololololol

चन्द्रकला (५१)

मगणश्च त्रयो दीप्ता लघुश्चन्द्रकलाभिधे ।।१७१।।

s s s ś ś ś l

रङ्गोद्योत : (५२)

मगणो लप्लुतौ रङ्गद्योतेताले प्रकीर्तिता: ।

s s s l ś

वर्णताल : (त्रिधा) (५३)

त्र्यस्रो मिश्रो द्विधा वर्णस्त्र्यस्रो लौ दौ लघुद्वयम् ।।१७२।।

lloo l l

इति त्र्यस्रवर्ण :

मिश्रो द्रुतचतुष्का: स्युर्विरामान्तास्त्रय: पृथक् ।

प्लुतो गुरुर्द्वयञ्च गुरुर्लघुस्ततो गुरु: ।।१७३।।

o o o ȣ o o o ȣ o o o ȣ ś s o o s l s l

इति मिश्रवर्ण :

चतुरस्रोऽपि दृश्यते गलौ द्रुतौ गुरुश्चेति ।

s l o o s

इति चतुरस्रवर्ण :

वीरविक्रम: (५४)

लघुर्द्रुतत्रयस्यान्ते गुरु:स्याद्वीरविक्रम: ।।१७४।।

l o o o s

सिंहताल : (५५)

सिंहताले लघुर्दश्च लघूनां त्रितयन्तत: ।

l o l l l

राजचूडामणि : (५६)

राजचूडामणौ दद्वौ नगणश्च द्रुतौ लगौ ॥१७५॥

oolllools

रङ्ग : (५७)

रङ्गश्चतुर्द्रुती गश्च

oooos

श्रीरङ्ग : (५८)

श्रीरङ्गः सगणो लपौ ।

lls lś

करुणा (५९)

गुरुणैकेन करुणातालः सद्भिः प्रकीर्तितः ॥१७६॥

s

तुरगलील : (६०)

विरामान्तद्रुतद्वयाद् द्रुतौ तुरंगलीलः स्यात् ।

o&oo

पञ्चम : (६१)

पञ्चमाभिधताले तु द्रुतस्य युग्मकम्भवेत् ॥१७७॥

o o

जगद्रञ्जकताल : (६२)

जगद्रञ्जकताले तु द्रुतौ द्वौ च लघुद्वयम् ।
द्रुतद्वन्द्वं लघुर्दश्च लघोः पञ्चद्रुती लघुः[1] ॥१७८॥

oollooloIooooool

मण्ठ : (६३)

मण्ठके जगणः प्रोक्तः ।

lsl

---

1. P. भवेत् o o l l o o l o l o o o o o

### लक्ष्मीताल : (६४)

तथा लक्ष्म्याह्वये पुनः ।
दौ लो दार्धद्वयन्दोलो दौ दार्धद्वितयन्द्रुतः ॥१७९॥
दार्धञ्च दद्वयन्दार्धन्दलौ

o o l v v o l o o v v o v o o v o l

### कल्याणक : (६५)

कल्याणकस्त्वयम् ।
द्रुतत्रयन्द्रुतार्धञ्च दो[1] दार्धन्दत्रयं लघुः ॥१८०॥

o o o v o v o o o l

### कुम्भताल : (६६)

कुम्भताले द्रुताः पञ्च दार्धन्दः सविरामकः ।
द्रुतौ दार्धं विरामान्त[2]द्रुतो लौ द्वौ द्रुतो लघुः-[2] ॥१८१॥

o o o o o v ऽ o o v ऽ l l o l

### त्रिपुट : (६७)

त्रिपुटाभिधताले च द्रुतो लद्वितयन्तथा ।

o l l

### रायभयङ्कर : (६८)

रायभयङ्करे ताले षड्द्रुती दार्धकद्वयम् ॥१८२॥
द्रुतश्चार्धद्रुताः षट् च द्रुतो दार्धद्वयन्द्रुतः ।
द्रुतार्धौदावर्द्धदश्च दविरामोऽर्द्धदास्त्रयः ॥१८३॥
विरामान्तद्रुतो दार्धं चतुष्कञ्च लघुद्वयम् ।

o o o o o o v v o v v v v v v o v v o o v ऽ v v v ऽ v v v v ll

---

1. Q.R.T. दौ—o o o v o o v o o o l
2-2. QR द्रुतो लो द्वौ, T द्रुतो लो लो द्वो (?)

### गजताल : (गजलीलः) (६९)

गजताले सुललितमुक्तं लघुचतुष्टयम् ॥१८४॥

| | | |

### चूडामणि : (७०)

तथा चूडामणौ ताले चतुर्दी दार्द्धयुग्मकम् ।
द्रुतश्चार्द्धद्रुतौ द्वौ च दत्रयन्दार्द्धकद्वयम् ॥१८५॥
दात् षट्कार्द्धी ददार्द्धे दौ दार्द्धन्दौ दाधर्के लघुः ।

o o o o v v o v v o o o v v o v v v v v v o v o o v o o v v I

### रिपुभयङ्करः (७१)

गलपा दगपाः पश्च लपौ लो लगपा गपौ ॥१८६॥
गपौ लघुश्च विज्ञेयास्ताले रिपुभयङ्करे ।

s I ś o s ś ś I ś I I s ś s ś s ś I

### लघुशेखर : (७२)

लघुशेखरताले तु सविरामलघुर्भवेत् ॥१८७॥

f

### रच्चा (७३)

रच्चाताले लघोर्बिन्दुः सविरामः प्रकीर्तितः ।

I 8

### सिंहनन्दन : (७४)

सिंहनन्दनके ताले तपौ लो गो द्रुतद्वयम् ॥१८८॥
तपौ लपौ गुरुलौ[1] द्वौ निःशब्दं लचतुष्टयम् ।

s s I ś I s o o s s I ś s II I ४

### सिंहलील : (७५)

सिंहलीलाभिधे ताले लघोरन्ते द्रुतत्रयम् ॥१८९॥

I o o o

हंसलील : (७६) (निःसारु : )

हंसलीले विरामान्तं लघुद्वन्द्वमुदाहृतम् ।
इममेवोचिरे तालं केचिन्निःसारुसंज्ञया ॥१९०॥

f f

ढेङ्किकाताल : (योजनः) (७७)

रगणो ढेङ्किका कैश्चिदेष प्रोक्तस्तु योजनः ।

s l s

शरभलील : (७८)

लौ द्वौ चतुर्द्रुती लौ द्वौ ताले शरभलीलके ॥१९१॥

l l o o o o l l

कङ्काल : (७९)

उक्तश्चतुर्धा कङ्कालः पूर्णः खण्डः समोऽसमः ।
चतुर्द्रुती गलौ पूर्णः

o o o o s l

खण्डो दौ द्वौ गुरुद्वयम् ॥१९२॥

o o s s

समो गुरू द्वौ लघ्वन्ते

s s l

विषमो लाद्गुरुद्वयम् ।

l s s

प्रतितालः (८०)

लाद्द्रुतौ प्रतितालः स्यात् ।

l o o

प्रत्यङ्ग : (८१)

प्रत्यङ्गे मगणो लघू ॥१९३॥

s s s l l

विजय : (८२)

विजये स्युः पगपलाः

ś s ś l

जय : (८३)

जये जो लो द्रुतौ प्लुतः ।

l s l l o o ś

पृथ्वीकुण्डलः (८४)

नयौ भनौ मभौ यौ च यभौ तपजगा द्रुतौ ।।१६४।।
प्लुतश्चान्ते भवेद्यत्र पृथ्वीकुण्डलसंज्ञिके ।

lll lss sll lll s sss sll lss lss lssssllssl ślslsooś

त्रिभङ्गिः (८५)

ताले त्रिभङ्गिसंज्ञे तु लघुद्वन्द्वं गुरू तथा ।।१६५।।

llss

सिंहविक्रमः (८६)

सिंहविक्रमसंज्ञे तु मलनागलपास्तथा ।

ssslśslś

अन्ये न दर्शितास्ताला ग्रन्थविस्तरभीरुणा ।।१६६।।

तद्भेदज्ञापनोपायाश्चत्वारस्तान्ब्रुवेऽधुना ।
प्रस्तारसंङ्ख्ये नष्टञ्चोद्दिष्टञ्चेत्यथ लक्षणम् ।।१६७।।

न्यस्याल्पमाद्यान्महतोऽधस्ताच्छेषं यथोपरि ।
प्रागूने वामसंस्थांस्तु[1] सम्भवे महतो लिखेत् ।।१६८।।

अल्पानसम्भवे तालपूर्त्यै भूयोऽप्ययं विधिः ।
सर्वद्रुतावधिः कार्यः प्रस्तारोऽयं लघौ गुरौ ।।१६६।।

प्लुते व्यस्ते समस्ते च न तु व्यस्ते द्रुतेऽस्ति सः ।
ननु त्वया दगलपैः प्रस्तारोऽत्र प्रदर्शितः ।।२००।।

विरामादिस्वरूपस्य प्रस्तारः किन्न लक्षितः ?
ब्रूमो विश्रान्तिरूपस्य विरामस्य भवेद्यदि ।।२०१।।

प्रस्तारादिकमेतद्वल्लयान्तं[2] तत्प्रसज्यते ।
तत्स्वीकारे त्वतिव्याप्त्या शास्त्रं व्याकुलितम्भवेत् ।।२०२।।
अतो विरामसहितप्रस्तारादिकथा वृथा ।

इति प्रस्तारः ।

---

1. P. संस्थाप्य
2. P लयोत्थं, Q लक्षणं तत्प्रयुज्यते

एकद्व्यङ्कौ क्रमान्नस्य युञ्जीतान्त्यम्पुरातनैः ।।२०३।।

द्वितीयतुर्यषष्ठाङ्कैरभावे तुर्यषष्ठयोः ।
तृतीयपञ्चमाङ्काभ्यां क्रमात्तं योगमग्रतः ।।२०४।।

लिखेद्दक्षिणसंस्थैवमङ्कश्रेणी विधीयते ।
सा चाङ्कैरिष्टतालस्थद्रुतसङ्ख्यैः समाप्यते ।।२०५।।

द्रुतो लघुः सार्द्धमात्रो गुरुः सार्द्धद्विमात्रिकः ।
प्लुतः सार्द्ध त्रिमात्रश्चेत्येकैकद्रुतवर्धितैः ।।२०६।।

तालभेदाः क्रमादङ्कैः सङ्ख्यायन्ते स्थितैरिह ।
यदङ्कयोगादन्त्योऽङ्को लब्धस्तैरन्ततः क्रमात्[1] ।।२०७।।

भेदा द्रुतान्तलघ्वन्तगुर्वन्ताश्च प्लुतान्तकाः ।
सङ्ख्यायन्त इति प्रोक्ताः संख्या निःशङ्कसूरिणा ।।२०८।।

इति सङ्ख्या[2] ।

अत्रैतावतिथो भेदः किं रूप इति पृच्छति ।
यत्र तन्नष्टमाख्यातन्तस्योत्तरमिहोच्यते ।।२०९।।

भेदानां यावतां मध्ये नष्टप्रश्नः कृतो भवेत् ।
तावत्सङ्ख्याङ्कपर्यन्तां लिखेत्सङ्ख्याङ्कसन्ततिम् ।।२१०।।

अन्त्याङ्के तत्र नष्टाङ्कं पातयेदथ शेषतः ।
पातयेत्पूर्वपूर्वाङ्कं तत्र त्वपतिताद्द्रुतः ।।२११।।

पूर्वश्चेत्पतितो न स्याल्लघुस्तु पतिताद्भवेत् ।
उत्तरेणाकृतार्थेन सहितात्तदसम्भवे ।।२१२।।

---

1. सं.र. 5/323

2 W.

o l ol s os ś oś lś olś s ś sśś lsś olsś
(oss) (śś) (ośś).
1 2 3 6 10 19 33 60 106 191 390 610 1080 इत्यधिकः पाठः
(340)

अकृतार्थेन पूर्वेण ान्तरे पतिते पृथक् ।
लघुर्निरन्तरे त्वस्मिँल्लघुरेव गुरुर्भवेत् ।।२१३।।

गुरुहेतोस्तृतीये तु ानिने गः प्लुती भवेत् ।

अङ्काभावे द्रुता ग्राह्यास्तालपूरणहेतवः ।।२१४।।
इति नष्टस्य विज्ञेयमुत्तरं रूपनिर्णयात् ।

इति नष्टम् ।

ईदृग्रूपोऽत्र कतिधा भेदः प्रश्न इतीदृशः[1] ।।२१५।।

उद्दिष्टन्तत्र सङ्ख्याङ्कसन्ततिं नष्टवल्लिखेत् ।
यैरङ्कैः पतितैर्नष्टे लभ्यन्ते यें द्रुतादयः ।।२१६।।

[2]तानेवाङ्काल्लँभन्ते ते भेदमुद्दिष्टमाश्रिताः-[2] ।
[3]यद्वा षट्प्लुतहेत्वङ्कमध्येऽन्त्यात्प्राचिसप्तमे ।।२१७।।

तदभावे तु षष्ठाङ्के पातितेऽन्त्याङ्कमध्यतः ।
यः शेषः स प्लुताल्लभ्यो लब्धहीनान्त्यशेषतः ।।२१८।।
ज्ञानम्पूरणसङ्ख्याया उद्दिष्टोत्तरमिष्यते-[3]

इत्युद्दिष्टम् ।

[4]तालव्यत्ययप्रस्तारेऽधोऽधो दलगपान्क्रमात् ।।२१९।।
न्यस्येद्वामे तदूर्ध्वस्थान्दक्षिणे द्रुतपूरणम् ।
किन्तु सव्यतं एकैकन्त्यक्त्वा प्रस्तारयेत्क्रमात्-[4] ।।२२०।।

इति विपरीतप्रस्तारः ।

---

1. इतीरितः

2-2. L. पाठोऽयं नोपलभ्यते

3-3. L इमे श्लोकाः नोपलभ्यते, तेषां स्थाने तत्र 'अङ्काः स्युःत्रगिष्टा ये तेभ्य उद्दिष्ट साधनम् । इति पाठः' । P पुस्तके (1)-(1) पाठः पठितः ।

4-4. पाठोऽयं P ग्रन्थे नोपलभ्यते ।

[1]नष्टोद्दिष्टङ्कथं ज्ञेयम्प्रस्तारेऽत्र विपर्यये ।
प्रश्नाङ्कैरेव कार्यं हि नष्टे चैकम्परित्यजेत् ॥२२१॥
उद्दिष्टे चैकमादाय शेषकार्यन्तु पूर्ववत् ।

इति विपरीतनष्टोद्दिष्टे

द्रुतादिकान्तप्रस्तारं हारखण्डचतुष्टये ॥२२२॥

तत्तत्प्रधानकं रूपं कृत्वा तु प्राक् निरर्थवत् ।
तत्त[1]त्सङ्ख्यान्ततः पश्चान्नष्टोद्दिष्टे तु पूर्ववत् ॥२२३॥

इति द्रुतहारनष्टोद्दिष्टे ।

नष्टोद्दिष्टं कथञ्चात्र मध्यरूपोपरिस्थिते ।
निश्चित्य मध्यरुपाङ्कं तत्रैकाङ्कम्परित्यजेत् ॥२२४॥

शेषम्प्रश्नाङ्कमादायोपरिनष्टन्तु पूर्ववत् ।
उद्दिष्टे[3] लब्धकाङ्केषु[4] मध्याङ्कन्तत्र पातयेत् ॥२२५॥
शेषमेकं समादाय शेषकार्यन्तु पूर्ववत् ।

इति मध्यरूपोपरिस्थितनष्टोद्दिष्टे ॥

नष्टोद्दिष्टप्रकारं हि मध्यरूपादधः कथम् ? ॥२२६॥

उक्तमध्याङ्कके चैकं युक्त्यान्यत्पूर्ववत्स्मृतम् ।
उद्दिष्टे मध्यमाङ्केषु लब्ध्वा (ब्धा) ङ्कान् सम्परित्यजेत् ॥२२७॥

शिष्टमध्याङ्कतश्चैकमादायोद्दिष्टमीरितम् ।

इति मध्यरूपादधःस्थितनष्टोद्दिष्टे ।

---

1-1. इमे श्लोकाः P ग्रन्थे नोपलभ्यते
2. W ततः
3. Q उत्तिष्ठे
4. L लघ्वङ्काकेषु (?)

[1]-आदौ रूपमथैकैकमङ्कसङ्ख्याङ्कसन्ततेः ॥२२८॥

क्रमादधोऽधो विन्यस्येदन्त्यादींश्चतुरस्तथा-[1] ।
स्वपङ्क्तिस्थाँल्लिखेदङ्कानग्रसङ्ख्याङ्कवद्युतान्[2] ॥२२९॥

[3]-किन्तु प्रतिनिधिर्नात्र विद्यते तुर्यषष्ठयोः-[3] ।
इष्टतालद्रुतमितेष्वङ्केषु लिखितेष्विति ॥२३०॥

[4]-क्रमादन्त्योपान्त्यतुर्यषष्ठैर्यत्र द्रुतादयः ।
ज्ञायन्ते[5] सर्वभेदस्थाः पातालः सोभिधीयते-[4] ॥२३१॥

इति पातालः ।

सङ्ख्योपान्त्यम्पातयित्वा पातालान्त्याङ्कतः क्रमात् ।
तच्छिष्टाङ्कश्च पातालोपान्त्याद्यः क्रमशो लिखेत् ॥२३२॥
तदङ्कात्सर्वपातालमादिशेद्विठ्ठलोदितम् ।

**इति सर्वपातालः ।**

[5]-पङ्क्तिं कृत्वेष्टतालस्थद्रुतसंमितकोष्ठिकाम् ॥२३३॥

तिरश्चीं तत्परामूनां कोष्ठेनाथ ततः पराः ।
द्विद्विकोष्ठोनिताः स्वस्वपूर्वतोऽथाङ्कयोजना ॥२३४॥

द्वौ द्वौ तासामाद्यकोष्ठौ स्यातामेकाङ्कसंयुतौ ।
अधस्तन्यास्तृतीयादौ विषमे कोष्ठके लिखेत् ॥२३५॥

अन्त्याद्यङ्कचतुष्कस्य योगं सङ्ख्याङ्कसंघवत् ।
समे त्वन्त्यं विनैतेषां योगन्यसाथ पङ्क्तिषु ॥२३६॥

---

1-1. L. सङ्ख्याङ्कसन्ततेश्चाध आदावेकाङ्ककं न्यसेत् ।
अन्त्योपरिस्थसङ्ख्याङ्कानन्त्यादींश्चतुरस्तथा ॥

2. P. संयुतान्

3-3. L तुर्यषष्ठप्रतिनिधिर्नैवात्रेत्यङ्कयोगतः ।

4-4 P. अन्त्योपान्त्यतुर्यषष्ठमन्त्यादूर्ध्वं स्थितन्तथा ।
पश्चाङ्कयोगादन्त्योऽङ्को भवेत्पातालसञ्ज्ञकः ।:

5. W. मीयन्ते

परासु शेषकोष्ठेषु चतुर्योगोऽयमिष्यते ।
नास्ति प्रतिनिधिस्त्वासामङ्कयोस्तुर्यषष्ठयोः ॥२३७॥

तासु स्वभावतो यास्तु निष्पन्ना ऊर्ध्वपङ्क्तयः ।
तन्मध्ये तु समा कोष्ठेऽन्त्यस्थानेऽन्त्यादधस्तनः ॥२३८॥

अङ्कः कार्योऽथ तैरङ्कैर्भेदसङ्ख्याभिधीयते ।
विषमायामूर्ध्वपङ्क्तौ स्थितैरङ्कैरधः क्रमात् ॥२३९॥

एकद्रुताद्या विषमत्र्यादिसङ्ख्या द्रुता भिदाः ।
सर्वद्रुतान्ता मीयन्ते समपङ्क्तिस्थितैः पुनः ॥२४०॥

द्रुतहीनादयो द्व्यादिसमसङ्ख्या द्रुता भिदाः ।
सर्वद्रुतान्ता ज्ञायन्ते द्रुतमेरुरयं मतः ॥२४१॥
ऊर्ध्वपङ्क्तिस्थसर्वाङ्कयोगात् सङ्ख्यापि गम्यते-[1] ।

इति द्रुतमेरुः ।

[2]-लघुमेरौ कोष्ठपङ्क्तीः प्राग्वन्न्यस्येत्तदादिमः ॥२४२॥

एकैककोष्ठ एकाङ्कयुक्तोऽधः पङ्क्तिकेषु तु ।
शेषकोष्ठेष्वन्त्यतुर्यषष्ठयोगं निवेशयेत् ॥२४३॥

परासां शेषकोष्ठेषूपान्त्याधस्तनसंयुतम् ।
त्रियोगमेवमादध्यादत्र च द्रुतमेरुवत् ॥२४४॥

सदसत्त्वे प्रतिनिधेः कोष्ठाङ्कैरूर्ध्वपङ्क्तिगैः ।
लघुहीनादुपक्रम्यैकाद्येकोत्तरवृद्धलाः ॥२४५॥

सर्वलान्ताः क्रमाज्ज्ञेयाः सङ्ख्या सर्वाङ्कसङ्गतेः[2] ।

इति लघुमेरुः ।

---

1-1. इमे श्लोकाः P पुस्तकं विहाय सर्वपुस्तकेषु नोपलभ्यन्ते

2-2. इमे श्लोकाः P पुस्तकं विहाय सर्वपुस्तकेषु नोपलभ्यन्ते । किन्तु गुरुमेरुः, प्लुतमेरुः संयोगमेरुः, खण्डप्रस्तारः, द्रुतमेरुनष्टम्, द्रुतमेरुबंधः पङ्क्तिसमकोष्ठनष्टम्, द्रुतमेरुबंधः पङ्क्तिसमकोष्ठोद्दिष्टम् |आद्यपंक्तिविषमकोष्ठनष्टमित्यादयस्तत्र नोपलभ्यन्ते ।

द्रुतलघुगुरुत्रिमात्रामेरुकसंयोगमेरवो व्यर्थाः ।
इति मत्वाऽत्र न लिखिताः पर्वतखननाच्च मूषकप्राप्तिः ॥२४६॥

### तालसाधनानि

षोढा तु साधनान्यत्र क्रियामार्गग्रहस्तथा ।
परिवृत्तो लयश्चैव यतिश्चेत्यथ लक्षणम् ॥२४७॥

### क्रिया (मार्गतालानां क्रिया)

तत्र क्रिया द्विधा प्रोक्ता निःशब्दा शब्दसंयुता ।
निःशब्दा तु चतुर्धोक्ताऽऽवापो निष्क्रामकस्तथा ॥२४८॥

विक्षेपश्च प्रवेशश्चेत्यशब्दा तूच्यते कला ।
क्रमादाऽऽवापनिष्क्रामौ कनिष्ठाद्यङ्गुलिक्रमात् ॥२४९॥

हृदः स्वपार्श्वे निर्यातः स्वपार्श्वाद् हृतमागतः ।
अग्राद्वक्षः समायातो वक्षसोऽग्रे विनिर्गतः ॥२५०॥

विक्षेपश्च प्रवेशोऽपि तर्जन्यादङ्गुलिक्रमात् ।
सशब्दाऽपि ध्रुवः शम्या तालकः सन्निपातकः ॥२५१॥

ध्रुवो हस्तस्य पातः स्याच्छोटिका शब्दपूर्वकः ।
शम्या दक्षिणहस्तस्य तालो वामकरस्य तु ॥२५२॥
उभयोः सन्निपातः स्यात्तासां मार्गवशान्मितिः ।

### इति क्रियाः ।

मार्गाः स्युस्तत्र चत्वारो ध्रुवश्चित्रश्च वार्त्तिकः ॥२५३॥

दक्षिणश्चेति तत्र स्याद् ध्रुवके मात्रिका कला ।
शेषेषु द्वे चतस्रोऽष्टौ क्रमान्मात्राः कलां भवेत् ॥२५४॥

ध्रुवका सर्पिणी कृष्णा पद्मिनी च विसर्जिता ।
विक्षिप्ताख्या पताका च मात्रा स्यात्पतिताष्टमी ॥२५५॥

सशब्दाऽत्र ध्रुवा ज्ञेया सर्पिणी वामगामिनी ।
कृष्णा दक्षिणतो याता पद्मिनी स्यादधोगता ॥२५६॥

विसर्जिता बहिर्याता विक्षिप्ता कुञ्चनात्मिका ।
पताका तूर्ध्वगमनात् पतिता करपातनात् ।।२५७।।

ध्रुवपाते प्रयोज्यास्ता नावापादौ कदाचन ।
ध्रुवे ध्रुवकला योज्या चित्रे त्वाद्यन्तिमे कले ।।२५८।।

वार्तिके त्वादिरन्त्ये द्वे क्रमादष्टौ च दक्षिणे ।

### मात्रा (मार्गतालविषये)

पञ्चलघ्वक्षरोच्चारमिता मात्रेह कथ्यते ।।२५९।।

अनया मात्रयाऽत्र स्याल्लघुगुर्वादिकल्पना ।
लयभेदा क्षिप्रमध्यचिरभावैरनेकधा ।।२६०।।

### इति मार्गः ।

तालद्रुतादिग्रहणमात्रं स्यात् क्रियया ग्रहः ।
समश्च विषमश्चेति स द्विधा परिकीर्तितः ।।२६१।।

गीतादिसमकालस्थो घातो योऽसौ समग्रहः ।
विषमो द्विप्रकारः स्यादतीतोऽनागतस्तथा ।।२६२।।

गीतेऽतीते त्वतीतः स्याद् घातातीते त्वनागतः ।
लयाः क्रमात् समादौ स्युर्मध्यद्रुतविलम्बिताः ।।२६१।।

### इति ग्रहः ।

आवृत्तिर्या कल्पना तत्परिवर्त्तनमिष्यते ।

### इति परिवृत्त : (परिवर्तनम्) ।

क्रियानन्तरविश्रान्तिर्लयः स त्रिविधो मतः ।।२६४।।

द्रुतो मध्यो विलम्बश्च द्रुतः शीघ्रतमो मतः ।
द्विगुणद्विगुणौ ज्ञेयौ तस्मान्मध्यविलम्बितौ ।।२६५।।

द्रुतः लघ्वादिस्वस्वार्धकालः शीघ्रतमः स्मृतः (?)[1]

1. अस्पष्टोऽयं श्लोकार्धः ।

इति लयः ।

लयप्रवृत्तिनियमो यतिरित्यभिधीयते ।।२६६।।
तालैकावृत्तितः किन्तु यतिरेका भवेद्ध्रुवम् ।
समा खर्जूरिका स्रोतोगता गोपुच्छिका ततः ।।२६७।।
पिपीलिका मृदङ्गेति सा प्रोक्ता षड्विधा बुधैः ।
आदिमध्यावसानेषु लयैकत्वे समा भवेत् ।।२६८।।
बह्वभ्यस्तौ लयौ यौ कौ तालैकावृत्तितो यदि ।
तदा खर्जूरिका प्रोक्ता लक्ष्यलक्षणकोविदैः ।।२६९।।
आदौ स्थूललयेऽन्यत्र सूक्ष्मे स्रोतोगतोदिता ।
स्रोतोगता विपर्यासात् गोपुच्छा प्रोच्यते बुधैः ।।२७०।।
लये सूक्ष्मेऽन्तरान्यत्र स्थूले प्रोक्ता पिपीलिका ।
पिपीलिकाविपर्यासान्मृदङ्गा यतिरिष्यते ।।२७१।।
समा तु त्रिविधा तत्र द्रुतमध्यादिभेदतः ।
खर्जूरिकायामेकैव लयावृत्तेरभेदतः ।।२७२।।
अवशिष्टाश्चतुर्धा स्युः प्रत्येकं यतयोऽखिलाः[1] ।
एतास्तु मिलिताः सर्वाः विंशतिश्च भवन्ति हि ।।२७३।।

इति यतिभेदाः ।

लक्ष्यलक्ष्मविरोधात्मग्राहैर्योऽत्यन्तदुस्तरः ।
तालकाब्धिर्निर्भयन्तं[2] जनास्तरन्तु विठ्ठलात् ।।२७४।।

इति श्रीकर्णाट[3]-जातीयपण्डरीकविठ्ठलविरचिते
नर्तन[4]-निर्णये तालधत्तृप्रकरणं प्रथमम् ।।

---

1, L वृत्तयो
2. L तालर्वाधं निर्भयं (?) Q.R. तालवाब्धिनिर्भयं; V. W. X. तालवार्द्धिनिर्भयं ।
3. QR कर्णाटक ।
4. QR नृत्य ।

# प्रकरणं द्वितीयम्

## (मृदङ्गिप्र ारणम्)

ध्वनिमेलविदा पाटतालादिगुणवेदिना ।
मृदङ्गो वाद्यते येन स मृदङ्गीति गीयते ॥१॥

वादिको मुखरी चेति स द्विधा गदितो बुधैः ।
वादिको वादकर्ता स्याद् वादः[1] पक्षपरिग्रहः ॥२॥

स्वपक्षसाधनन्तद्वत् परपक्षस्य दूषणम् ।
करोति युक्तितः शास्त्रात्प्रहेल्यादिकभेदतः ॥३॥

सरक्तिकोमलध्वानैरबोहणकपाटजैः ।
विविधैर्वाद्यभेदैश्च जेता स्यात्प्रतिवादिनाम् ॥४॥

केवलश्राव्यकत्त्वात्तञ्जनाष्ठवणकञ्जगुः ।

मुखरी

कर्ता वाद्यप्रबन्धानान्नृत्तशिक्षाविशारदः[2] ॥५॥

गीतवादननिष्णातः[3] (सुरेखोन्तर्मुखश्च) यः ।
अर्द्धाङ्गमिव नर्तक्या वादयेद्रङ्गभूगतः ॥६॥

वादकैः प्रेक्षितमुखो वादनार्थे मुखर्यसौ ।
भारिकः कथितः सद्भिरवोहणकवादनात् ॥७॥
वादनाद्गीतमात्रेण गीतानुग इति स्मृतः ।

इति मुखरी ।

मृदङ्गिगुणदोषाश्च तस्य हस्तगुणास्ततः ॥८॥

---

1. L वाद्ये
2. Q & R विचक्षणः
3. V R & P नि.स्वानः

मृदङ्गलक्षणं हस्तपाटभेदास्ततः परम् ।
आरम्भश्चालिभेदाश्च व्याप्तिर्नेमाभिधस्ततः ॥९॥

नेमचालिर्व्याप्तिबन्धो मोहरश्च मलाहरः ।
अर्द्दिको मुक्तकश्चाथ मृदङ्गिस्थानकानि च ॥१०॥

मृदङ्गिवादनक्रमं क्रमाल्लक्षणमुच्यते ।

**'मार्दङ्गिकगुणदोषा :**

हस्तपाटप्रहारज्ञो गीतवादनकोविदः ॥११॥

यतितालल्याभिज्ञः पाटज्ञः पञ्चसञ्चवित् ।
दशहस्तगुणोपेतः पात्राऽभिप्रेतवादकः ॥१२॥

आतोद्यध्वनितत्त्वज्ञः समादिग्रहवेदकः[1] ।
गीतवादननृत्तस्थच्छिद्रच्छादनपण्डितः ॥१३॥

ग्रहमोक्षप्रदेशज्ञो गीतनृत्तप्रमाणवित् ।
वाद्ये समप्रभेदज्ञो[2] रूपरेखान्वितस्तथा ॥१४॥

उद्घट्टनपटुः सर्ववाद्यभेदविवेचकः ।
नादवृद्धिक्षयापत्तिकोविदः प्रतिभापटुः ॥१५॥

गुणाः मार्दङ्गिकस्यैते दोषः स्यात्तद्विपर्ययः ।
अतालज्ञमरक्तिज्ञमशास्त्रज्ञञ्च वादकम् ॥१६॥

परित्यजेयुर्विद्वांस[3] केवलञ्चर्मघातकम् ।

इति मार्दङ्गिकगुणाः (गुणदोषाः) ।

अथ पञ्चसञ्चलक्षणम्

स्कन्धकूर्परयोस्तद्वदङ्गुष्ठमणिबन्धयोः ॥१७॥

---

1. Q & R वेदिता
2. स.र. समस्तभेदज्ञो 6/1218
3. Q&R परित्यजेरन् विद्वांसः

वामस्य चरणस्यापि कम्पः सञ्चोऽभिधीयते ।
श्रेष्ठो मार्दङ्गिकः सञ्चादङ्गुष्ठमणिबन्धयोः ॥१८॥

सञ्चाभ्यां मणिबन्धोत्थकूर्पराभ्यान्तु मध्यमः ।
स्कन्धकूर्परसञ्चात्तु नीचो मार्दङ्गिक स्मृतः ॥१९॥

वामाङ्घ्रि सञ्चतः श्रेष्ठः सदा मार्दङ्गिको भवेत् ।
एतदुक्तविपर्यासाद्वरो हौडुक्किको मतः ॥२०॥

इति पञ्चसञ्चलक्षणम् ।

अथ मार्दङ्गिकहस्तगुणा :

वाञ्छानुगौ दृढौ व्यक्तौ स्निग्धौ दृढनखौ लघू ।
विधेयाङ्गुलिसञ्चारौ स्वेदहीनौ जितश्रमौ ॥२१॥

युक्तप्रहारौ च करौ प्रोक्तौ दशविधाविति[1] ।

इति मार्दङ्गिकहस्तगुणा : ।

## मृदङ्गलक्षणम्

अनीरतीरजातस्य रक्तचन्दनकस्य च ॥२२॥

खदिरस्य शिरीषस्य बीजवृक्षस्य वा पुनः ।
ग्रन्थिव्रणविहीनस्य सुपक्वस्य समस्य च ॥२३॥

मृदङ्गो घट्यते लक्ष्यवेदिना शिल्पिना यथा ।
हरीतक्याकृतिः सम्यक् सुदृढञ्च सचिक्कणम् ॥२४॥

चतुस्ताल[2]स्त्वसौ दैर्घ्ये पिण्डे त्वङ्गुलसम्मितः ।
षष्ठाङ्गुष्ठमितो[3] मध्यो वेष्टनात्कुम्भदेशतः ॥२५॥

---

1. Q&R दशगुणाविति–
2. 'अङ्गुष्ठमध्यमाङ्गुल्यौ यद्वस्तस्य प्रसार्यते ।
तदग्रयोरन्तराले तालमाहुर्मनीषिणः ॥'
(वेदकृतसङ्गीतमकरन्दे–श्लो. 199)
3. L षष्ठ्यङ्गुष्टमितो, P. षष्टाङ्गुलमितो V. षष्टाङ्गुलिमिंतो ।

एकादशाङ्गुलमितं कर्तव्यन्दक्षिणम्मुखम् ।
वदनं[1] वामतः किन्तु द्वादशाङ्गुलसम्मितम् ॥२६॥

छागस्यारोगिणः कृत्वा पारीर्जाठरचर्मणः ।
अतिस्वच्छतरारोममुण्डिता वर्त्तुलाश्च षट् ॥२७॥

निक्षिप्य पारिकास्ता [श्च] किञ्चिदुष्णजले पुनः ।
कराभ्याम्मर्दयेत्तञ्च[2] कोमलं मलवर्जितम् ॥२८॥

तिस्रतिस्रपारिकाश्च प्रत्येकं वदने न्यसेत् ।
तत्रान्तर्बाह्यदेशस्थपार्योरुभयतो मुखे ॥२९॥

लक्ष्यज्ञः छेदयेत्सम्यक् मध्यङ्कमलपक्षवत्[3] ।
तत्तन्मध्यगते पायौ सव्या सूक्ष्मदला भवेत् ॥३०॥

सदृढो (ढा)-प्यपरा सम्यक् छादयेद्वदनद्वयम् ।
डम्बराभिधसूत्रेण बध्नीयात्तु मिथो दृढम् ॥३१॥

षट्त्रिंशच्च यथा रन्ध्राण्यङ्गुलान्तरितानि च ।
मुखयोः पार्श्वतः कुर्याद्वर्तुलाकारतः पुनः ॥३२॥

तत्र द्वे महिषीचर्मकशे मल्लशराभिधे ।
ते प्रोत्य द्विगुणीकृत्य वेणीवन्मेलयेद्दृढम् ॥३३॥

यावदष्टादशगृहं[4] प्रत्येकं वदनद्वये ।
अथात्र माहिषीचर्मकशान्दीर्घतरान्दृढाम्[5] ॥३४॥

एकाङ्गुलदलां सम्यक् समीकृत्य च सर्वतः ।
घृतेन लेपनङ्कृत्वा शोषयेद्दिनमेकतः[6] ॥३५॥

---

1. QR वादनं
2. L तज्ज्ञः
3. Q&R पत्रवत्
4. Q&R० गृहे
5. V, Q&R दीर्घतनां
6. L शोधये०

निधाय तत्कशां क्षीरे मर्दयेच्च दिनत्रयम् ।
त्रिकालन्दध्नि तद्वत्तु ततस्तण्डुलपिष्टतः[1] ।।३६।।

दध्ना संलेप्य संशोष्य यन्त्रे च समता[2] नयेत् ।
तथा प्रतिगृहम्प्रोत्य[3] बद्धव्यो मर्दलो दृढम् ।।३७।।

शोषयित्वोत्तार्य ततः परिधीः पारिकाश्च[4] ताः ।
अन्तर्बाह्याश्रिताश्छित्वा[5] चन्द्रवद्वर्तुला[6] यथा ।।३८।।

ततो मृदङ्गमुखयोः पुनर्बद्ध्वा तु पूर्ववत् ।
दक्षिणं वदनं लिम्पेद्बोहणायसकिट्टतः[7] ।।३९।।

भूतिमिश्रेण भक्तेन तथा गोधूमपिष्टतः ।
पिण्डिकां पूरिकाकारां[8] वामवक्त्रे निवेशयेत् ।।४०।।

वक्त्रयोः प्रान्तदेशे तु कृत्वा वलययुग्मकम् ।
बद्ध्वानुबन्धनन्तत्र वस्त्रजम्पट्टजञ्च वा ।।४१।।
मृदङ्गचतुरः कट्यास्तटे न्यस्याऽथ वादयेत् ।

**मार्जना :**

मायूरी चार्द्धमायूरी तथा कार्मारवीति च ।।४२।।

तिस्रश्च श्रुतिसंज्ञाः स्युर्मृदङ्गे स्वररूपतः ।
वामे पुटेऽथ गान्धारः षड्जो दक्षिणतः पुटे ।।४३।।

ऊर्ध्वाङ्गे मध्यमो यत्र मायूर्यां स्वरसङ्गतिः ।
यत्र वामे पुटे षड्ज ऋषभो दक्षिणे पुटे ।।४४।।

---

1. L पिष्टताः
2. Q&R समतां
3. L पोत्य
4. Q&R परिकाश्च
5. L श्रित्वा, V स्थित्वा
6. P. वर्त्तुलं
7. भूतिमिश्रस्यौदनस्य बोहणमिति संज्ञा । भूतिः काष्टभस्मः । आयसकिट्टः मण्डूरः
8. P ०कारां

धैवतश्चोर्द्धवगः कार्यस्त्वर्द्धमायूरिकाश्रयः ।
ऋषभो मर्दले वामे षड्जो दक्षिणतः पुटे ।।४५।।

पञ्चमश्चोर्द्ध्वदेशे च कार्माख्यां स्वरा इति ।
एवं जलधरध्वानगम्भीरो भवति ध्वनिः ।।४६।।

निगदन्ति मृदङ्गन्तन्मर्दलम्मुरजन्तथा ।
पुष्कर‑ नयश्चान्ये जनाः पक्षावजञ्जगुः ।।४७।।

इति मृदङ्गलक्षणम् ।

उक्त पूर्वा ये पाटादिभेदास्त्वत्राऽपि मर्दले ।
भवन्ति किन्तु पाटानां तेषां विविधगुम्फनात् ।।४८।।

हस्तोद्भवाः पाटभेदाः हस्तपाटाः प्रकीर्तिताः ।
ते चानन्त्यान्न शक्यन्ते प्रत्येकं वेदितुं जनैः ।।४६।।

प्रदर्शनार्थमेतेषु कति भेदान् वदाम्यहम् ।
समग्रहश्च विषमः समपाणिश्च कुञ्चितः ।।५०।।

पाणिहस्तो भ्रमरकः पाण्यन्तरविघातकः ।
विषमपाणिर्विभ्रमश्च सम्भ्रान्तोत्फुल्लको ततः ।।५१।।

कोणाहतः पार्श्वपाणिः खलको गुरुगुञ्जितः ।
अर्द्धार्द्धपाणिरर्द्धादिपाणिरुल्लोलबिन्दुकौ ।।५२।।

ऊर्ध्वपाणिः पृष्ठपाणिरन्त पार्श्वादिघातकौ ।
कर्त्तरीसमकर्त्तर्यौ ततो विषमकर्त्तरो ।।५३।।

खण्डादिकर्त्तर्यर्द्धादिकर्तरी नागबन्धकः ।
स्वस्तिकश्चेति त्रिंशच्चोद्दिष्टास्ते त्वथ लक्षणम् ।।५४।।

**समग्रह : (i)**

समं करतलाभ्यान्तु समघातात्समग्रहः ।

**विषम : (ii)**

हस्तवैषम्यसञ्जातो विषमः सम्मतः सताम् ।।५५।।

**समपाणि :**

अङ्गुष्ठाङ्गुलिसंघातैर्हस्तयोर्युगपद्यदा ।
पीड्यते च[1] पुटद्वन्द्वं समपाणिस्तदा भवेत् ।।५६।।

**कुञ्चित :**

मुकुलस्याग्रघातेन कुञ्चितः कथितो बुधैः ।

**पाणिहस्त :**

समपाणिः कपित्थस्याकृतित्वे[2] पाणिहस्तकः ।।५७।।

**भ्रमर :**

भ्रमरो हस्तपाटः स्यात् समस्ताङ्गुलिताडनात् ।

**पाण्यन्तरविघातक :**

यस्तु दक्षिणहस्तस्य तर्जन्यङ्गुष्ठघाततः ।।५८।।

क्रमव्युत्क्रमघातात्तु वामहस्तेन रेफवत् ।
जायते मुनिना प्रोक्तः पाण्यन्तरविघातकः ।।५९।।

**विषमपाणि :**

व्यत्ययाद् व्यावृतौ हस्तौ साङ्गुष्ठाङ्गुलिभिः क्रमात् ।
यस्मिन् विषमपाणिं तम्ब्रूते पण्डरिविठ्ठलः ।।६०।।

**विभ्रम :**

चलनम्मणिवन्धस्य पताकस्य च कम्पने ।
पादकम्पो भवेद् यर्हि स पाटो विभ्रमो भवेत् ।।६१।।

**सम्भ्रान्त :**

सर्वाङ्गुल्यग्रघातश्च सर्वाङ्गुलिविवर्तनम् ।
यदा निष्पद्यते सोऽत्र सम्भ्रान्तः कथितस्तदा ।।६२।।

---

1. 'पीडयेतां' इति सं.र. 6/865
2. L कपित्थस्यावृत्तित्वे Q कपित्थः स्यावृत्तित्वा R कपित्थस्याद्वृत्तित्वे,

**उत्फुल्ल :**

उत्फुल्लो नखराघातादलपद्मस्य जायते ।

**कोणाहत :**

कनिष्ठाङ्गुष्ठसंयोगाच्छेषाङ्गुलिविवर्तनात् ॥६३॥
कोणाहतो हस्तपाटः कथितो भरतादिभिः ।

**पार्श्वपाणि :**

वादनान्नखराग्रेण पार्श्वपाणिरुदाहृतः ॥६४॥

**खलक :**

यदा प्रसारिताङ्गुष्ठः शुकतुण्डेन हन्यते ।
विरलाङ्गुलिभिर्वाद्यङ्क्रमेण खलकस्तदा ॥६५॥

**गुरुगुञ्जित :**

अङ्गुष्ठानामिकाभ्यस्तचलनाद्[1] दक्षिणे पुटे ।
उच्छ्वासाद्वामपाणेश्च जायते गुरुगुञ्जितः ॥६६॥

**अर्द्धार्द्धपाणि :**

अर्द्धार्द्धपाणिरर्द्धाभ्याङ्करयोस्ताडनाद्भवेत् ।

**अर्द्धपाणि :**

अर्द्धपाणिर्भवेदेककराग्रकृतवादनात्[2] ॥६७॥

**उल्लोलहस्तपाट :**

लोलो व्यवहिताङ्गुष्ठो दक्षिणो यस्य साधकः ।
वामश्चोञ्छलितो हस्तउल्लोलन्तम्प्रचक्षते ॥६८॥

**बिन्दु :**

अवष्टभ्य पुटं पृष्ठभागतस्तर्जनीहते ।
क्रमेण सर्वतो वाऽपि बिन्दुरुत्पद्यते तदा ॥६९॥

---

1. L वलनात्
2. P ताडनात्, Q&R हतताडनात्

**ऊर्ध्वपाणिक :**

पताकमध्यतो घाताद्विरामादूर्ध्वपाणिकः ।

**पृष्ठपाणि :**

पताकपृष्ठघाताच्च पृष्ठपाणिरुदाहृतः ॥७०॥

**अन्तर्घात :**

अरालतर्जनीघातादन्तर्घात इति स्मृतः ।

**पार्श्वघात :**

अर्द्धचन्द्रा[1]ङ्गुष्ठघातात् पार्श्वघात इतीरितः ॥७१॥

**कर्त्तरी**

प्रचालनाद्वामहस्ताऽलपल्लवस्य[2] कर्त्तरी ।

**समकर्त्तरी**

कर्त्तरीभ्यां समं घातात् कराभ्यां समकर्त्तरी ॥७२॥

**विषमकर्त्तरी**

क्रमेण ताडनाद्द्वाभ्याम्भवेद्विषमकर्त्तरी ।

**खण्डकर्त्तरी**

घाताद् दक्षिणहस्तेन विरलाङ्गुलिना ततः ॥७३॥
अङ्गुष्ठघातैर्वामेन पीडनात् खण्डकर्त्तरी ।

**अर्धकर्त्तरी**

तर्जनीमध्यमानामा विरलाः प्रहरन्ति चेत् ॥७४॥
अनामादिक्रमेणैव गोमुखस्यार्द्धकर्त्तरी ।

**नागबन्ध :**

नागबन्धो विपर्यासात् पुटयोः करघाततः ॥७५॥

---

1. L चिन्हा

2. Q दत्तपद्मस्य

**स्वस्तिक :**

प्रत्येकन्तु पुटद्वन्द्वे कराभ्यां स्वस्तिको भवेत्[1] ।
कथिता बालबोधार्थं कियन्तो हस्तपाटकाः ॥७६॥
अन्येऽपि चतुरैरुह्या लोकवृत्तानुसारतः ।

इति हस्तपाटा : ।

थकाराद्यन्तकूटादि पाटैः कोमलरञ्जकैः ॥७७॥
बद्धः केचन (केनचित्) तालेन त्वादावारम्भको भवेत् ।

इत्यारम्भ : ।

**चालिभेदा :**

सवर्णव्याप्तिकूटादिपाटैर्बहुविदा रकैः ॥७८॥
वर्णसंवादितस्यान्तै[2]-वैचित्र्यं वादनं क्रमैः ।
भूरिभिश्चरणैर्बद्धाः गतयश्चालि उच्यते ॥७९॥
थोमान्ताद् भवनचालिः कर्त्तर्याधिक्यतस्तथा ।
कर्त्तरीचालिका प्रोक्ता खलकाधिक्यतः पुनः ॥८०॥
बोहुर्चालि[3]-रिति प्रोक्ता उल्लोलैर्बिन्दुभिस्तथा ।
दिगिदिगितकतकैर्भेदैः[4] स्यादनुचालिका ॥८१॥
केचित्तु चालिसङ्ख्याया नियमन्नऽचचक्षिरे ।
क्रमेण तधिथोंनेभ्यो[5] वर्णेभ्यश्च यथोचिते ॥८२॥

---

1. सं.र. नागबन्धः :—
'प्रत्येकं वां पुटद्वन्द्वे कराभ्यान्ताडनादयम्' इत्यधिकः पाठः, । स्वस्तिकः पुटमेकं निहन्यातां स्वस्तिके स्वस्तिकौ करौ ।' तदेव समीचीनः 6/-69
2. Q&R स्थान्तै
3. Q&R बिन्दुचालि
4. Q दिगिदिगितकधिकै
5. Q&R तद्धियोनेभ्यो

प्रयोजिते कूटमाने वर्णव्याप्तिस्तदा भवेत् ।
धरयोर्धिरयोरग्रे धुरयोर्द्धुमयोस्तथा ॥८३॥

धुनयोः कूटमाने च वर्णव्याप्तिः परे जगुः ।
तिकिटानां[1] गिडदानां मेलनङ्कूट उच्यते ॥८४॥

एतद् यथोचितम्मानङ्कूटमानमिति स्मृतम् ।
तथयोर्धथयोः साम्यमाहुरत्र विपश्चितः ॥८५॥

इति चालिभेदाः ।

**व्याप्ति :**

यत्र कूटादिभिः पाटैर्वर्णव्याप्त्या च योजिताः ।
पञ्च वा सप्त खण्डाः स्युरुन्नतोन्नतराः क्रमात् ॥८६॥

यत्राधः सूक्ष्मविरतिर्भूरिवद्वेकरूपवान् ।[2]
एषः (षा ?) स्याच्छेषखण्डादौ तालोऽत्र स्वेप्सितो मतः ॥८७॥

तदाऽसौ व्याप्तिरित्युक्ता मुक्तिः स्यात्तु थकारतः ।
कूटमानम्परे प्रान्ते प्राहुर्लक्ष्यविशारदाः ॥८८॥

इति व्याप्तिः ।

**नेम :**

वर्णव्याप्त्या च खण्डादिपाटैर्बद्धास्त्रिखण्डकाः ।
चत्वारो वा थकारान्ता उच्चोच्चतरतापराः ॥८९॥

तत्राद्यस्त्रिविरामात्मखण्डः स्यादतिसुन्दरः ।
भूयो भूयस्त्वेकरूपपाटमिश्रपरम्परः ॥९०॥

तदाद्यौ द्वौ विरामौ तु तुल्यौ दीर्घस्तृतीयकः ।
एनन्तु प्रतिखण्डादौ सकृद्वा द्विः समभ्यसेत् ॥९१॥
एवं यदाऽसौ नेमः स्यात्तालोऽत्र स्वेप्सितो भवेत् ।

इति नेमः ।

---

1. Q&R तक्किडानां
2. Q.R. वद्धेकरूपिणी

**नेमचालि :**

यत्र नेमाद्यखण्डोक्तलक्ष्मयो[1] (लक्षणो) जनसम्मितः ॥९२॥

नेमाख्योऽतोऽम्बुक[2] स्थोन्तश्चतुर्विरतिसुन्दरः ।
मत्तमातङ्गगतिवद्वाद्यभेदविनिर्मितः ॥९३॥

ततस्तथा वैस्निगाख्यः सद्वाद्ये[3] भिन्नवाद्यकः ।
ततश्चालिस्थोन्तिका स्याच्चतुर्विश्रामिकी ततः ॥९४॥

पूर्वोक्ता त्वनुचालिश्च वर्णव्याप्तिस्ततः परम् ।
कूटमानङ्क्रमाच्चेति तदा स्यान्नेमचालिका ॥ ९५॥

एक एव तु तालोऽत्र कवेरीप्सितको भवेत् ।

इति नेमचालि : ।

**व्याप्तिबन्ध :**

आद्यस्तत्तक्किड्दगाद्यैस्ततस्थौगिड्दगादिभिः ॥९६॥

धुम्गिद्दगादिभिः पश्चाद्धोङ्गिड्दगादिभिस्ततः ।
दंधलांगादिभिः पश्चाद्धो[4]न्तकृतकतकादिभिः ॥९७॥

एतत्क्रमेण षट्खण्डाः कूटमानञ्च सप्तमम् ।
यत्र स्याद् व्याप्तिबन्धन्तन्निगदन्ति मनीषिणः ॥९८॥

अत्राऽपि कश्चित्तालः स्यादेक एव मनोहरः ।

इति व्याप्तिबन्ध : ।

**मोहर :**

दं दं दां भूयसो धिं धिं थों थोमित्यादिभूरिभिः ॥९९॥

---

1. V, लक्ष्ययो
2. P. द्युक
3. Q सद्धटाद्ये R. सद्धटो P सद्वाटो ?
4. P थोन्तकतकादिभिः

कूटपाटादिभिर्बद्धाः सप्त वा पञ्च खण्डकाः ।
थोमान्तकाश्च थोमंशाः[1] पूर्वपूर्वात् परोन्नताः ॥१००॥

वर्णव्याप्त्यात्मको दीर्घस्त्वन्त्यखण्डो मनोहरः ।
यदा तदा मोहरः स्यात्तालोऽत्र कविनेप्सितः ॥१०१॥

पाटवर्णसुवैचित्र्यतालयत्यादिशोभितः ।
मोहाद्रञ्जयति श्रोतृचित्तंमोहरः स्मृतः ॥१०२॥

इति मोहरः ।

ब्रह्मविष्णुमहेशात्मखण्डाः स्युस्थोन्तकास्त्रयः ।
उत्तरोत्तरदीर्घश्च तालादिःमोहरोक्तवत् ॥१०३॥

किन्त्वत्र प्रतिखण्डादौ यतिः स्याद्भिन्नतालतः ।
एष मलाहरः प्रोक्तो द्विविधः स प्रकीर्तितः ॥१०४॥

[2]शान्तवीरादिभेदाभ्यां,शान्तः कोमलपाटजः ।
स भवेद्देवतागारे तूत्सवे वादजेत्तरि ?॥१०५॥

विषमैरुद्धतैः पाटैर्बद्धो वीरादिको मतः[2] ।
स वीरभद्ररूपादौ भवेद् युद्धपराक्रमे ॥१०६॥

धित्तामिति द्विरावृत्य तथोञ्च तकिटः सकृत् ।
तिमिर्द्विस्तिमितिर्द्विश्च तिमित्तिमिद्दथों सकृत् ॥१०७॥

एवमादिप्रकारेण[3] दां[4]थोमन्तैकखण्डकः ।
यतिरित्युच्यते सद्भिरन्यतालान्मलाहरे ॥१०८॥

मलमाहरति श्रोतृवादकानां महात्मनाम् ।
तस्मान्मलाहरः ख्यातो ब्रह्मविष्णुशिवात्मकः ॥१०९॥

इति मलाहरः ।

---

1. V&R थोमन्ताः
2-2. L. आदर्शपुस्तके पाठस्यस्याभावः ।
3. P क्रमेणैव
4. P दी Q & R ति.

**अर्दिः**

त्रिचतुष्पञ्च वा सम्यग्विरामैः श्रोत्रसुन्दरैः ।
भूरिवारैकरूपाढ्यैः कश्चित्तालेन निर्मितः ।।११०।।
एवं प्रबन्धखण्डोर्दिः स्यान्मुक्तौ थोङ्कृतिर्भवेत्[1] ।

इत्यर्दिः ।

**मुक्तकः**

वियत्पाटैस्थकारान्तस्त्वेकताल्या प्रयोजितः ।।१११।।
सूक्ष्मखण्डो मृदङ्गस्य मोक्षणा मुक्तकः[2] स्मृतः ।

इति मुक्तकः ।

**मृदङ्गस्थानानि**

चतुरस्रञ्च वैशाखमालीढम्मण्डलन्तथा ।।११२।।
प्रत्यालीढं च पञ्चैव स्थानकानि मृदङ्गिणाम् ।
आरम्भः स्तुतिशब्दश्च प्रहेली चालयस्ततः ।।११३।।
व्याप्तिर्नेमो नेमचालिर्व्याप्तिबन्धोऽथ मोहरः ।
मलाहारोर्दिभेदाश्च शेषभेदाः यथोचिताः[3] । ।।११४।।
अन्त्ये स्यान्मुक्तिकश्चेति मृदङ्गिवादनक्रमम् ।
मृदङ्गवादनमिव वाद्यान्यन्यानि तद्विदः ।।११५।।
तत्तत्प्रधानपूर्वाणि वादयन्तु यथोचितम् ।
लक्ष्यलक्षणदुष्टात्मव्याधैर्योऽत्यन्तदुर्गमः ।।११६।।
पुष्कराध्वा विठ्ठलेन निर्भयङ्गन्तुमुत्कृतः ।।

इति श्रीकर्णाटकजातीयपण्डरीकविठ्ठलविरचिते
नर्तननिर्णये मृदङ्गिप्रकरणम् द्वितीयम् ।

---

1. Q&R थोन्तको भवेत्
2. L शुक्तकः
3. P. यथेप्सिताः

# तृतीयं प्रकरणम्

## गायनलक्षणम्

शुद्धच्छायालगाभिज्ञो मूर्च्छनाग्रामतानवित् ।
सतालो रञ्जकङ्गीतं यो गायति स गायनः ।।१।।

एकलो[1] यमलो वृन्दगायनश्चेति स त्रिधा ।
एक एव तु यो गायेदसावेकलगायनः ।।२।।

सद्वितीयो यमलकः सवृन्दो वृन्दगायनः ।
गातृवादकसङ्घातो बृन्दमित्यभिधीयते ।।३।।

इति गायन : ।

## पदार्थसङ्ग्रह :

गायनस्य गुणा-दोषा-नादस्थानश्रुतिस्वराः ।
ग्रामश्च मूर्च्छनास्तानाः प्रस्तारस्तस्यसङ्ख्यकाः ।।४।।

नष्टोद्दिष्टे ततो वर्णालङ्कारगमकास्ततः ।
स्थाय्याश्चालप्तिभेदाश्च रागस्य स्थापनन्ततः ।।५।।

रागलक्ष्मस्वरूपाणि प्रबन्धलक्षणानि च ।
प्रबन्धगुणदोषाश्च ततो वाग्गेयकारकः ।।६।।

---

1. M एकल्लो

इत्युद्दिष्टाः क्रमात्तेषाम्प्रवक्ष्याम्यथ लक्षणम् ।
सुघटश्च सुशारीरो ग्रहमोक्षविचक्षणः ॥७॥

विविधालप्तिनिपुणः श्रावकः साम्प्रदायिकः ।
आयत्तकण्ठवान् शुद्धच्छायालगविशेषवित् ॥८॥

जितश्रमः सावधानो गायनानां गुणा दश ।
तत्तत्स्थानयथायोग्यङ्घटयन् सुघटः स्मृतः ॥९॥

तारमाधुर्यपुष्टित्वस्निग्धानुध्वनिकान्तिता ।
तत्सुशारीरमित्युक्तं शरीरेण सहोद्भवात् ॥१०॥

गीतारम्भसमाप्त्योश्च ग्रहताललयानुगः ।
गीतनिर्वाहकः प्रोक्तो ग्रहमोक्षविचक्षणः ॥११॥

आलापरूपकालापभञ्जन्यालपनेषु च ।
विविधालप्तिनिपुणस्तत्तदालापकोविदः ॥१२॥

दूरात्तु श्रूयते यस्माद्ध्वनिः श्रावक उच्यते ।
गुरुशिक्षानुसारेण साधकः साम्प्रदायिकः ॥१३॥

स्वाधीनध्वनिचातुर्यः स्मृतश्चायत्तकण्ठवान् ।
शुद्धे छायालगे चैव हिताहितविचारवान् ॥१४॥

मतिमान्यः स शुद्धादिछायालगविशेषवित् ।
अभ्यासतत्परो धीमान् त्रिसन्ध्यञ्च जितश्रमः ॥१५॥
स्वराधिक्ो विहीनो वा विरक्तः सावधानकः ।

इति गायनगुणा : ।

**गायनदोषा :**

अव्यवस्थितसीत्कारिकपिला[1]ऽव्यक्तकोद्धडाः ॥१६॥

---

1. L विकलो

वितालोद्घुष्टविरसव्यङ्गाङ्गः सानुनासिकः ।
इत्येते दश दोषाः स्युः प्रसिद्धा गायनाग्रिषु ।।१७।।

स्थानभ्रष्टः स यः प्राप्तुमशक्तस्त्वव्यवस्थितः ।
मुहुः सीत्कारतां कुर्वन् सीत्कारी कथितो बुधैः ।।१८।।

कपिलः[1] स तु यो गायेत् स्वरान्न्यूनाधिकश्रुतीन् ।
गद्गदध्वनिरव्यक्तवर्णस्त्वव्यक्त उच्यते ।।१९।।

छागवद्वहनिकुर्वन्नुद्धडो[2] ऽधमगायनः ।
कालज्ञानविहीनो यो वितालस्तालविच्युतः ।।२०।।

उद्घुष्टो[3] विरसो[4]-द्घोषः काकवत्क्रूरशब्दभाक् ।
विरसो नीरसो वर्ज्यस्वरगानादप[5]-स्वरः ।।२१।।

गलगल्लशिरोनेत्रकरादीनां विकारतः ।
गायन् व्यङ्गाङ्गकश्चासावधमाधमगायनः ।।२२।।
यदा नासिकया गायन् गीयते सानुनासिकः ।

इति गायनदोषाः ।

**नादः**

मनोयुक्ते विवक्ष्वात्मा[6] हन्ति वह्निम्मनोनलः ।
प्रेरयत्यनिलम्प्राणानिलश्चोर्ध्वं क्रमाच्चरन् ।।२३।।

नाभिहृद्गलशीर्षास्येष्वाविर्भावयति ध्वनिम् ।
ध्वनिस्तु नदधातोर्हि सद्भिर्नादो घत्रि स्मृतः ।।२४।।

---

1, सं.य विकलः 3/30
2. सं.र वहनीं कुर्वन्नुद्भटो, 3/32,
3 PQRS & Z 3 उद्घुष्टो
4. सं.र. विसरो 3/28
5. R दय।
6. Q&R विवक्षात्मा

अतिसूक्ष्मः सूक्ष्मपुष्टावतिपुष्टश्च कृत्रिमः।
पञ्चाख्या (ख्यामिति) धत्तोऽसौ चतुर्धा व्यवहारतः ॥२५॥

अनुमन्द्रो नाभिदेशे मन्द्रो हृदि गले पुनः ।
मध्यस्तारस्तु मूर्ध्नि स्याद् द्विगुणाश्चोत्तरोत्तराः ॥२६॥

यन्त्रेऽनुमन्द्रस्थानं स्याद्गायके तदशक्यतः ।
मन्द्रादित्रितयं स्थानं व्यवहारेऽभिधीयते ॥२७॥

हेतवो नादभेदस्य तिर्यक्सच्छिद्रनाडिकाः ।
द्वाविंशतिः प्रतिस्थानं सोपानकारवत्क्रमात् ॥२८॥

वायुपूरणतस्तासु तावत्यस्तूत्तरोत्तरम् ।
भवन्त्युच्चोच्चतरताः श्रुतयः श्राव्यमात्रतः ॥२९॥

रागादिव्यवहाराय तासु सप्तस्वराः स्थिताः ।
षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्ततः ॥३०॥

पञ्चमो धैवतश्चाऽथ निषादश्चेत्यनुक्रमात् ।
तेषां संज्ञा सरिगमपधनीत्यपरा मता ॥३१॥

वेदाऽचलाङ्कश्रुतिषु त्रयोदश्यां श्रुतौ ततः ।
सप्तदश्याञ्च विंश्याञ्च द्वाविंश्याञ्च श्रुतौ क्रमात् ॥३२॥

षड्जादीनां स्थितिः प्रोक्ता प्रथमा भरतादिभिः ।
असपाः पूर्वपूर्वस्मात् सञ्चरन्त्युत्तरोत्तरम् ॥३३॥

त्रिस्त्रिर्गतीस्ते प्रत्येकं यान्ति गश्च चतुर्गतीः ।
यद्यद्रागोपयोगः स्यात्तत्तदिच्छागतिर्भवेत् ॥३४॥

गन्योर्गती द्वितीये चान्तरकाकलिनौ स्मृतौ ।
पञ्चम्यष्टादशी षष्ठी तथा चैकोनविंशतिः ॥३५॥

चतस्रः श्रुतयश्चैता रागादिष्वप्रयोजकाः ।
शेषा अष्टादशैव स्युः श्रुतयः स्वरबोधकाः ॥३६॥

न्यूनाधिकैकगतिका मन्द्रतारस्वरा यदि ।
न रागहानिकाः सर्वे स्पष्टता मध्यसप्तके ॥३७॥

## स्वराणाञ्चातुर्विध्यम्

चतुर्विधाः स्वरा वादी संवादी च विवाद्यपि ।
अनुवादी च वादी तु प्रयोगे बहुलः स्वरः ॥३८॥

अंशस्थायीतिपर्यायौ रागोत्पादनहेतुकः ।
श्रुतयो द्वादशाष्टौ वा ययोरन्तरगोचराः ॥३९॥

मिथः संवादिनौ तौ स्तो गत्यादेश्च विभागतः[1] ।
एक श्रुत्यन्तरौ यौ कौ तौ मिथश्च विवादिनौ ॥४०॥

शेषाणामनुवादित्वं ज्ञेयमन्वर्थतः क्रमात् ।
क्वचिदंशः क्वचिन्न्यास क्वचित्यागस्वरस्तथाः ॥४१॥

तत्तद्रक्त्यानुसारेण रागेषु ग्रहतान्नयेत् ।
गीतादिनियतमात्रस्वरो ग्रह इतीरितः ॥४२॥

प्रयोगे बहुलोंशः स्यान्न्यासो गीतसमाप्तिकृत् ।
विदारीवानपन्यासो विदारी छेदकृन्मुहुः ॥४३॥

सर्वत्र रागतस्त्वेते स्वरभेदा भवन्ति हि ।
षड्जः सर्वत्र रागे च ग्रहो हि निधपादयः ॥४०॥

वर्णमात्राः प्रयोज्या ये रक्त्याधिक्यान्न ते स्वराः ।
अशेषा मूर्च्छनाः प्रोक्ताः षड्जस्थाने मुनीश्वरैः ॥४५॥
षड्जस्थानस्थितैर्न्याद्यै रजन्याद्या इति स्मृताः ।

## स्वरवक्तृपशव :

मयूरचातकच्छागक्रौञ्चकोकिलदर्दुराः ॥४६॥
गजश्च सप्त षड्जादीन् क्रमादुच्चारयन्त्यमी ।

## स्वरलक्षणम्

हृतिः श्रुतिस्ततो लग्नजातोऽनुरणनध्वनिः ॥४७॥

---

1. तथा निमैः ?

भावी दीप्तः श्रोतृचित्तं स्वतो रञ्जयति स रः ।
स्वराणान्निचयो ग्रामो मूर्च्छनादिसमाश्रितः ॥४८॥

भरतेनोदितौ शास्त्रे ग्रामौ द्वौ षड्जमध्यमौ ।
षड्जग्रामः पञ्चमे तु सप्तदश्यां श्रुतौ स्थिते ॥४९॥

स्वरेस्मिन् पञ्चमे किन्तु षोडशीश्रुतिसंश्रिते[1] ।
तदैव मध्यमग्रामः सोऽत्र रागे न दृश्यते ॥५०॥

षड्जग्रामाश्रितान् रागान् सर्वे गायन्ति गायकाः ।
तस्मान्मुख्यतमः षड्जग्राम एव न मध्यमः ॥५१॥

क्रमात्स्वराणां सप्तानामारोहे चावरोहणे ।
मूर्च्छ्यते यत्र रागो हि श्रोता वा मूर्च्छना मता ॥५२॥

ताः सप्त मध्यषड्जेन मूर्च्छनाऽऽरभ्यतेऽग्रिमा ।
अधस्तनैर्निषादाद्यैः षड्जस्थानस्थितैः क्रमात् ॥५३॥

षडन्या मूर्च्छनाः सादीन्तदूर्ध्वं सारयेत्क्रमात् ।
यस्यां यावतिथः षड्जस्तावतिथ्येव मूर्च्छना ॥५४॥

आद्या चोत्तरमन्द्रा च रजनी चोत्तरायता ।
शुद्धषड्जा मत्सरीकृताऽश्वक्रान्ताऽभिरुद्गता ॥५५॥

नामान्युक्तानि मुनिभिर्मूर्च्छनानां यथाक्रमम् ।
रागो[2]-पयोगतस्तासु षाडवौडुवतीकृताः ॥५६॥

षढ्स्वरैः षाडवाः प्रोक्तास्तौडुवाः पञ्चभिः स्वरैः ।
शुद्धताना इति ख्याताः पूर्णास्तानक्रियात्मकाः ॥५७॥

प्रवेशनिग्रहाभ्याञ्च द्विधा तानक्रिया भवेत् ।
प्रवेशः परसादृश्यमीषत्स्पर्शस्तु निग्रहः ॥५८॥

---

1. L माश्रिते
2. P. गीतो

**कूटताना :**

व्युत्क्रमात्कूटतानाः स्युः पूर्णाऽपूर्णाः पुरोदिताः ।

इति नादस्थानश्रुतिस्वरग्राममूर्च्छनातानाः ।

**प्रस्तार :**

किञ्चित्क्रमं विलिख्यादौ पूर्वः पूर्वः परादधः ॥५९॥

स्वरः स्थाप्यः स चेदग्रे तत्तत्पूर्वस्वरो भवेत् ।
प्रस्तारो वामतः कार्यः पुरस्तूपरिवर्तिनः ॥६०॥

मूलक्रमक्रमात्पृष्ठे शिष्टान्प्रस्तार ईदृशः ।
क्रमात्पूर्वस्वरस्थाङ्कसङ्ख्यान्त्यादिस्वरावलिम् ॥६१॥

अन्त्यादधोधो विलिखेत् कृतान्त्यक्त्वा क्रमो भवेत् ।
यदैकस्वरतश्चान्त्योपान्त्यधारान्ततो[1]ऽन्यथा ॥६२॥

मालाप्रस्तारक इति विठ्ठलेन प्रकीर्तितः ।

इति प्रस्तारः ।

अङ्कानेकाङ्कमारभ्य सप्तान्तान् विलिखेत्क्रमात् ॥६३॥

ऊर्ध्वमूर्ध्वं विहन्यात्तु पूर्वेणाङ्कम्परम्परम् ।
एकस्वरादितानानां सङ्ख्यैवं जायते स्फुटम् ॥६४॥

इति सङ्ख्या ।

**अथ नष्टम्**

मूर्च्छनान्त्यस्वरस्थाङ्काः प्रश्नाङ्कैः पातयेत्तु तान् ।
शेषान्प्राक्प्राक्स्वरस्थाङ्कैर्यथा हननसम्भवैः ॥६५॥

क्रमेण पातयेद्येनाहतिस्तावतिथः स्वरः ।
हतेरभावतः किन्तु कोऽपि पूर्वस्थित स्वरः ॥६६॥

---

1. P. धारो ततो

कार्य[1] द्वितीयाद् गणनं नष्टसिद्धिर्भवेत्तदा ।

इति नष्टम् ।

**उद्दिष्टम्**

नष्टबोधगता येऽङ्कास्तानन्त्याङ्केषु पातयेत् ॥६७॥

शिष्ट उद्दिष्टसिद्धिः स्यादित्यभाषत विठ्ठलः ।

इत्युद्दिष्टम् ।

**वर्णाः**

गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः ॥६८॥

स्थाय्यारोह्यवरोही च सञ्चारीत्यथ लक्षणम् ।
स्थित्वा स्थित्वा प्रयोगः स्यादेकस्यैव स्वरस्य यः ॥६९॥

रागादिव्यवहारेषु स्थायी वर्णः स उच्यते ।
आरोहन्ति स्वरा यत्र आरोही स प्रकीर्तितः ॥७०॥

यत्र चैवावरोहन्ति सोऽवरोहीति गण्यते ।
एतेषां मिश्रणाद्वर्णः सञ्चारी परिकीर्तितः ॥७१॥

इति वर्णाः ।

**अलङ्काराः**

विशिष्टं वर्णसन्दर्भमलङ्कारं प्रचक्षते ।
तस्य भेदा बहुतरास्तत्र स्थायिगतान् ब्रुवे ॥७२॥

एषामाद्यन्तयोरेकस्वरस्ते स्थायिनि स्थिताः ।
मन्द्रादिश्चाथ मन्द्रान्तो मन्द्राद्यन्तास्त्रयस्तथा ॥७३॥

मन्द्रमध्याभिधः पश्चात्पञ्चमः क्रमरेचितः ।
स्थायिवर्णगताः पञ्चालङ्काराः परिकीर्तिताः ॥७४॥

इति स्थायिवर्णगताऽलङ्काराः ।

---

1. V स्पष्ट

विस्तीर्णः सन्निकर्षश्च प्रेङ्खः प्रच्छादनस्ततः ।
आक्षिप्तबिन्दुहसिताः सप्त चारोहिणि स्थिताः ॥७५॥
इति आरोह्यलङ्काराः ।

प्रसादः प्राङ्मुखोत्क्षेपौ परिवर्तोद्वाहितौ ततः ।
निष्कूजितो रेचितश्च स्खलितः क्रमरञ्जितौ ॥७६॥

ह्लादमानश्च हुङ्कारः श्येनः सञ्चारिवर्णगाः ।
त्रयोदश क्रमादेषामथ लक्षणमुच्यते ॥७७॥

अलङ्कारप्रकरणोपयोगिनी परिभाषा

मन्द्रप्रकरणेऽत्र स्यान्मूर्च्छनाप्रथमस्वरः ।
स एव द्विगुणस्तारः पञ्चमो मध्य उच्यते ॥७८॥

लिपौ मन्द्रो बिन्दुशिरास्तारो रेखाशिरा भवेत् ।
मन्द्रमध्यात्परे तारे मन्द्रादिः कथितो यथा ॥७९॥

1
सं प स[1]

1
तद्वैलोम्येन मन्द्रान्तः स प सं[2]
मन्द्रयोर्मध्यगे पुनः ।

1
तारे च मन्द्राद्यन्तः स्यात् सं स सं
तारयोर्मध्यगे तथा ॥८०॥

मन्द्रे च मन्द्रमध्याख्यमलङ्कारविदो विदुः ।

1 1
स सं स[3]

आद्यन्ते मूर्च्छनादिश्चेत् स्वरो मध्ये[4] द्वितीयकः ॥८१॥

1. L सां प स
2. L सं प सं
3 L स सं स
4 P. मध्यो

सैका कलाऽथ चेन्मध्ये सतृतीयचतुर्थके ।
सा द्वितीया पञ्चमाद्यास्त्रयोन्तश्चेत्कला परा ॥८२॥

एवं कलात्रयेणोक्तोऽलङ्कारः क्रमरेचितः ।
संरिसं संगमसं संपधनिसं ॥

इति स्थायिगताऽलङ्काराः ॥

मूर्च्छनाऽऽदेः स्वराद्यत्र क्रमेणारोहणम्भवेत् ॥८३॥

स्थित्वा स्थित्वा स्वरैर्दीर्घैः स विस्तीर्णोऽभिधीयते ।
सा री गा मा पा धा नी ॥

ह्रस्वैः स्वरैः सन्निकर्षो द्विर्द्विरुक्तैर्निरन्तरैः ॥८४॥
सस रिरि गग मम पप धध निनि ॥

स्वरद्वयं समुच्चार्य पूर्वं पूर्वयुतम्परम् ।
यदान्दोलितमारोहे प्रेङ्खाख्यः कथितो यथा ॥८५॥
सरी रिगा गमा मपा पधा धनी निसा ॥

त्रिस्वराऽऽद्या कलान्त्ये च पूर्वपूर्वान्तिमादिमे ।
कलेस्तस्त्रिस्वरे यत्र तदा प्रच्छादनाभिधः ॥८६॥

सरिग गमप पधनि ॥

एकान्तरं स्वरयुगन्तादृक्पूर्वयुतम्परम् ।
क्रमादारोहति यदा तदाऽऽक्षिप्तम्प्रचक्षते ॥८७॥

सग गप पनि ॥

पूर्वं स्वरन्त्रिरुच्चार्य सकृत्तत्परकं स्वरम् ।
एवं क्रमङ् क्रमात्कुर्वन्नारोहे बिन्दुसंज्ञकः ॥८८॥

ससससरि गगगम पपपध निनिनिस ॥

यत्रैकोत्तरवृद्धाभिरावृत्तिभिरुदीरिताः ।
आरुह्यन्ते स्वराः प्राह हसितन्तम्मुनीश्वरः ॥८९॥

स रिरि गगग मममम पपपपप धधधधधध निनिनिनिनिनिनि ।।
आरोहेण क्रमादेते सप्त चाप्यवरोहिणि ।

इत्यारोह्यवरोह्यलङ्कारा: ।।

पूर्वः पूर्वः परस्योर्ध्वाधोवर्ती क्रियते स्वरः ।।६०।।
यदा तदा प्रसादन्तमाह श्रीभरतो मुनिः ।
सरिस रिगरि गमग मपम पधप धनिध निसनि ।।
कला गतागतवती द्विस्वरैकैकहानतः ।।६१।।
यत्राऽन्यास्तादृशः स स्यात् प्राङ्मुखः परिकीर्तितः ।
सरिरिस रिगगरि गममग मपपम पधधप धनिनिध ।।
त्रिस्वराश्चेत् कलाः पूर्वपूर्वत्यागोर्द्ध्वसङ्क्रमैः ।।६२।।
यदा तदाऽऽक्षेपकाख्यः प्रसिद्धो गानवेदिनाम् ।
सरिग रिगम गमप मपध पधनि धनिस ।।
स्वरन्द्वितीयमुज्झित्वा त्रिस्वराऽऽद्या कला यदि ।।६३।।
त्यक्तादारभ्य तादृश्योऽन्यास्तदा परिवर्त्तकः ।
सगम रिमप गपध मधनि पनिस ।।
कलायान्त्रीन्स्वरान्गीत्वाऽवरुह्यैकम्पराः कलाः ।।६४।।
यत्रैकैकोज्झिता गीतास्तद्वदुद्वाहितस्तु सः ।
सरिगरि रिगमग गमपम मपधप पधनिध धनिसनि ।।
प्रसादस्य कलाङ्गीत्वा तत्कलाऽऽदेस्तृतीयकम् ।।६५।।
गत्वाऽऽद्य गानाद्भवति निःकूजितकनामकः ।
सरिसगस रिगरिमरि गमगपग मपमधम पधपनिप ।
आद्य[1] स्वरन्द्वितीयञ्च तृतीयञ्च द्वितीयकम् ।।६६।।

1. Q आद्यास्वरं

पुनःक्रमात् स्वरांस्त्रींश्च गीत्वा चैककला यदि ।
एवं कलाषट्ककञ्च गीत्वाऽसौ रेचितः स्मृतः ॥९७॥

सरिगरिसरिगा रिगमगरिगमा गमपमगमपा
मपधपमपधा पधनिधपधनी धनिसनिधनिसा ॥

कलाम्प्रयुज्य मन्द्रादेर्द्विरुक्तोर्ध्वस्वरान्वितः ।
अवरुह्येत चेदेषस्खलिताख्यस्तदा भवेत् ॥९८॥

सगरिममरिगस रिमगपपगमरि गपमधधमपग मधपनिनिपधम ।

यत्राऽसौ क्रम इत्युक्तः कला द्वित्रिचतुःस्वराः ।
आद्यस्वराद्यास्तिस्रः स्युर्द्वितीयाद्यादयस्तथा ॥९९॥

सरिसरिगसरिगम रिगरिगमरिगमप गमगमपगमपध मपमपधमपधनि
पधपधनिपधनिस ॥

द्विरुक्ता यदि मन्द्रान्ता मन्द्रादेः स्युः कलास्तदा ।
रञ्जिताख्यो भवेदेष प्रसिद्धो गानवेदिनाम् ॥१००॥

सरिगसरिगसा रिगमरिगमरी गमपगमपगा मपधमपधमा
पधनिपधनिपा धनिसधनिसधा ॥

आदिमेन कला यत्र द्विस्वराऽऽद्या गतागतैः
स्वरैरेकोत्तरैर्वृद्धैः स हुङ्कारो निगद्यते ॥१०१॥

सरिरिस सरिगगरिस सरिगममगरिस
सरिगमपपमगरिस सरिगमपधधपमगरिस
सरिगमपधनिनिधपमगरिस ॥

क्रमात्सरिगमाद्यैः स्यात् श्येनः संवादियुग्मकैः ।

सप रिध गनि मस

एते सञ्चार्यलङ्कारा आरोहेण प्रदर्शिताः ॥१०२॥

एतानेवाऽवरोहेण प्राह श्रीभरतो मुनिः ।

इति सञ्चार्यलङ्काराः ।

इति प्रसिद्धालङ्कारा: पञ्चविंशत्युदीरिता: ॥१०३॥

अनन्तत्वात्तु ते शास्त्रे न सामस्त्येन कीर्तिता: ।
रक्तिलाभ: स्वरज्ञानं वर्णाङ्गानां विचित्रता ॥१०४॥

इति प्रयोजनान्याहुरलङ्कारनिरूपणे ।

इत्यलङ्कारा: ।

**गमका:**

गमक: स्वरकम्प: स्यात् श्रोतृहृदयरञ्जक: ॥१०५॥

तस्य भेदास्तु तिरप: स्फुरित: कम्पितस्तत: ।
लीन आन्दोलितवलित्रिभिन्नकुरलाऽऽहता: ॥१०६॥

उल्लासित: प्लावितश्च मुद्रितो हुम्फितस्तत: ।
नामितो मिश्रित: पञ्चदश इत्यथ लक्षणम् ॥१०७॥

लघ्विष्ठडमरुध्वानकम्पानुकृतिसुन्दर: ।
द्रुततुर्यांशवेगेन तिरप: परिकीर्तित: ॥१०८॥

स्फुरितो द्रुततृतीयांशाद् द्रुतार्द्धात्कम्पितं विदु: ।
द्रुतवेगेन लीन: स्यादान्दोलो लघुवेगत: ॥१०९॥

बलिर्वेगाधिकत्वेन त्रिभिन्नस्तु स उच्यते ।
त्रिस्थानेषु स वैचित्र्यमविश्रान्तघनस्वर: ॥११०॥

कुरलो बलिरेव स्यात् कण्ठकोमलग्रन्थिल: ।
स्वरमग्रिममाहत्य निवृत्तस्त्वाहतो भवेत् ॥१११॥

उल्लासित: क्रमाद् गच्छन् प्लावित: प्लुतमानत: ।
हृदयङ्गमहुङ्कारगम्भीरो हुम्फितो भवेत् ॥११२॥

मुद्रितो मुखमुद्रेण नामितो नयनाद्भवेत् ।
कतिचिन्मिश्रणान्मिश्रो बहुधाऽप्यूह्यताम्बुधै: ॥११३॥

इति गमका: ।

अथ स्थायभेदाः

रागस्याऽवयवः स्थायो वागो गमकं उच्यते ।
मयोक्तो गमकः पूर्वन्त्वधुना स्थाय उच्यते ॥११४॥

भजनः स्थापनगती शब्दढालौ च वाहनी ।
छाया चेति क्रमात्तेषां लक्षणम्प्रतिपाद्यते ॥११५॥

रागस्यातिशयाधानाद्भजनः परिकीर्तितः ।
स्थाप्य स्थाप्य पदे रम्ये कृतिः स्थापनिको भवेत् ॥११६॥

गतिर्गति विलासः स्यान्मत्तमातङ्गवद्गतिः ।
मुक्तशब्दपरिग्राह्यः शब्दो माधुर्यपुष्टतः ॥११७॥

शब्दभेदाः

चतुर्भेदो भवेच्छब्दः खाङ्गलो[1] नारहाटक[2] ।
बोम्बको मिश्रकश्चेति कफजः खाड्गलो मतः ॥११८॥

असौ सुस्निग्धमधुरप्रौढतासौकुमार्ययुक् ।
पित्तजो नारहाटः स्याद्रूक्षगम्भीरयुग्ध्वनिः ॥११९॥

वातजो बोम्बकः स्यात्तु स्थूलः निःसारतायुतः ।
एतत्सम्मिश्रणादुक्तो मिश्रकः सान्निपातिकः ॥१२०॥

निःसाररूक्षताहीन उत्तम परिकीर्तितः ।
खाड्गलो बोम्बयुक्तश्चेन्मध्यमः कथितो बुधैः ॥१२१॥

बोम्बनाराटसंयुक्तः शब्दानामधमः स्मृतः ।
विलुण्ठनात्मको मुक्ताफलवढ्ढाल उच्यते ॥१२२॥

आरोह्यादित्रये तिष्ठन् कम्पनं वाहनी भवेत् ।
छायाकाकुः षट्प्रकारा स्वररागाऽन्यरागजा ॥१२३॥

स्याद्देशक्षेत्रयन्त्राणान्तल्लक्षणमथोच्यते ।
श्रुतिन्यूनाधिकत्वेन या स्वराश्रयसंश्रया । १२४॥

---

1-2. खाहुलो नारटा सं.र. 3/39

स्वरान्तरस्य रागे स्यात् स्वरकाकुरसौ मता ।
या रागस्य निजच्छाया रागकाकुञ्च[1] तां विदुः ॥१२५॥

सा त्वन्यरागकाकुर्या रागे रागान्तराश्रया ।
सा देशकाकुर्या रागे भवेद्देशस्वभावतः ॥१२६॥

शरीरं क्षेत्रमित्युक्तम्प्रतिक्षेत्रन्निसर्गतः ।
रागे नानाविधा काकुः क्षेत्रकाकुरिति स्मृता ॥१२७॥

वीणावंशादिकोत्थाऽसौ यन्त्रकाकुः सताम्मता ।

इति स्थाया : ।

आलप्ति :

वर्णालङ्कारसम्पन्ना गमकस्थायचित्रिता ॥१२८॥
आलप्तिरुच्यते तज्ज्ञैर्बहुवैचित्र्यसंयुता ।

रागालाप :

ग्रहांशतारमन्द्राणां न्यासापन्यासयोस्तथा ॥१२९॥

अल्पत्वस्य बहुत्वस्य षाडवौडुवयोरपि ।
अभिव्यक्तिर्यत्र दृष्टा स रागालाप उच्यते ॥१३०॥

आलप्त्यालापयोः सम्यक् प्रकटीकरणञ्च यत् ।
रागालापनमित्युक्तं लक्ष्यलक्षणकोविदैः ॥१३१॥

आलप्तिर्द्विविधा प्रोक्ता रागवस्तुविशेषणात् ।
स्वस्थानकैश्चतुर्भिर्या क्रियते रूपकं विना ॥१३२॥

रागालप्तिर्यत्र रागस्वरे संवेश्यते च सः ।
स्थायी ततश्चतुर्थस्तु द्व्यर्धं इत्यभिधीयते ॥१३३॥

स्थायीस्वरादष्टमस्तु द्विगुणः परिकीर्तितः ।
द्व्यर्द्धद्विगुणयोर्मध्ये स्थिता अर्धस्वराभिधाः ॥१३४॥

---

1. L. तु

स्थायिनो द्व्यर्धतोऽर्वाक्च स्वरसञ्चालनन्तथा ।
स्थायिनोऽधस्तनश्चापि वादनात्प्रथमम्भवेत् ॥१३५॥

द्व्यर्द्धस्वरे चालयित्वा न्यसनन्तद्द्वितीयकम् ।
अर्द्धस्वरे चालयित्वा तदेव तु तृतीयकम् ॥१३६॥

द्विगुणञ्चालयित्वा तु स्थायिन्यासाच्चतुर्थकम् ।
एभिश्चतुर्भिः स्वस्थानै रागालप्तिर्मता सताम् ॥१३७॥

स्थायः :

आलाप एव ठायः (स्थायः) स्यात्पृथग्भूतविदारिका ।

रूपकालप्ति :

रूपकस्थेन रागेण तालेन च विधीयते ॥१३८॥

रूपकालप्तिरेषा तु द्विविधा परिकीर्तिता ।
प्रतिग्रहणिकाद्या च भञ्जनीसंज्ञिका परा ॥१३९॥

विधाय स्थायमालप्ते रूपकावयवो यदि ।
प्रतिगृह्येत सा प्रोक्ता प्रतिग्रहणिका बुधैः ॥१४०॥

भञ्जनी द्विविधा ज्ञेया स्थायरूपकभञ्जनात् ।
यदा तत्पदमानेन स्थायो रूपकसंस्थितः ॥१४१॥

नानाप्रकारः क्रियते सा ज्ञेया स्थायभञ्जनी ।
तैः पदैस्तेन मानेन समग्रं रूपकं यदि ॥१४२॥

अन्यथा चान्यथा गायेदसौ रूपकभञ्जनी ।
इम (य) मेवोच्यते लोके नेमशब्देन गायकैः ॥१४३॥

इत्यालप्तिभेदा : ।

स्तोकस्तोकैस्तनुस्थायैः प्रसन्नैर्बहुभङ्गिभिः ।
जीवस्वरव्याप्तिमुख्यै रागस्य स्थापना भवेत् ॥१४४॥

इति स्थापना ।

**राग :**

योऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रञ्जको जनचित्तानां स रागः कथितो बुधैः ॥१४५॥

स्वराणाङ्क्रमभेदाच्च नानागमकभेदतः ।
षाडवौडवभेदाच्च[1] सम्पूर्णादिगतिभेदतः ॥१४६॥

ग्रहांशन्यासभेदाच्च नानादेशजनोद्भवाः ।
अनन्ता रागभेदाः स्यु रूढिदेशस्वराभिधाः ॥१४७॥

शुद्धसालगसङ्कीर्णा इति रागास्त्रिधा पुरः ।
नान्योपजीविनः शुद्धाः केवला रञ्जकात्मकाः ॥१४८॥

छायान्तरेण रक्ता ये रागाः सालगसंज्ञकाः ।
मूलच्छायान्तराद्रक्ता रागाः सङ्कीर्णका इति ॥१४९॥

अनन्तत्वात्तु रागाणाम्प्रत्येकं वक्तुमक्षमः ।
केषाञ्चिन्मतमाश्रित्य कति रागान्वदाम्यहम् ॥१५०॥

शुद्धभैरवहिण्डोल[2] देशिकारास्ततः परम् ।
श्रीरागः शुद्धनाटश्च नट्टनारायणश्च[3] षट् ॥१५१॥

रागा देवमयाः ख्यातास्तद्धेतुः कथ्यतेऽधुना ।
सद्यो जातोद्भवः शुद्धभैरवो वामदेवतः ॥१५२॥

हिण्डोलो देशिकाराख्यस्त्वघोरात्तत्पुरुषतः ।
श्रीरागः सुद्धनाटाख्योऽ[4]पीशानवदनोद्भवः ॥१५३॥

नट्टनारायणो रागो गिरिजामुखत[5]स्ततः ।
एतेषां वनिताः पुत्राः पञ्च पञ्च क्रमाद्ब्रुवे ॥१५४॥

---

1. P. भेदाद्य
3. M&V हिन्दोल
3. P नटनारायण
4 Q 7034 - ख्यई
5. R. मुखज

### शुद्धभैरवस्य सुभ्रुवः

धन्नासी भैरवी चैव सैन्धवी मारवी तथा ।
आसावरीति पञ्चैताः शुद्धभैरवसुभ्रुवः ॥१५५॥

### भैरवस्य सूनवः

भैरवः शुद्धललितः पञ्चमः परजस्तथा ।
बङ्गालश्चेति पञ्चैते शुद्ध भैरवसूनवः ॥१५६॥

### हिन्दोलस्य स्त्रियः

भूपाली च वराली[1] च तोडी प्रथममञ्जरी ।
तुरुष्कतोडिका चेति हिन्दोलस्य हि नारिका ॥१५७॥

### हिन्दोलपुत्राः

वसन्तः शुद्धबङ्गालः श्यामः सामन्तकस्तथा ।
कामोदश्चेति पञ्चैते हिन्दोलस्य सुता अमी ॥१५८॥

### देशिकारस्य स्त्रियः

रामक्री बहुली देशी जयतश्रीश्च गूर्जरी ।
देशिकारस्य पञ्चैता विख्याताश्च वराङ्गनाः ॥१५९॥

### देशिकारस्य पुत्राः

ललितश्च विभासश्च सारङ्गस्त्रिवणस्तथा[2] ।
कल्याण इति पञ्चैते देशिकारस्य सूनवः ॥१६०॥

### श्रीरागस्य स्त्रियः

गौडी पाडी पुण्करी नादरामक्रिया तथा ।
गुण्डक्रीति च पञ्चैताः श्रीरागं हि समाश्रिताः ॥१६१॥

---

1 Q बरारी

2. Q & R तिखणस्तथा

### श्रीरागस्य पुत्राः

टक्कश्च देवगान्धारो मालवः शुद्धगौडकः[1] ।
कर्णाटबङ्गाल इति श्रीरागस्य तनूद्भवाः ॥१६२॥

### शुद्धनाटस्त्रियः

मालवश्रीश्च देशाक्षी देवक्री मधुमाधवी ।
आहेरीति च विख्याताः शुद्धनाटवरस्त्रियः ॥१६३॥

### शुद्धनाटस्य पुत्राः

जियावन्तश्च सालङ्गनाटः कर्णाटकस्ततः ।
छायानाटो हमीरादिर्ना[2]-टो नाटस्य सूनवः ॥१६४॥

### नट्टनारायणस्त्रियः

वेलावली च काम्बोजी सावेरी सुहवी तथा ।
सौराष्ट्रीश्चेति पञ्चैताः नट्टनारायणस्त्रियः ॥१६५॥

### नट्टनारायणपुत्राः

मल्हारगौण्ड[3]- केदारशङ्कराभरणास्ततः ।
विहागडश्चेति सुता नट्टनारायणस्य च ॥ १६६॥

अथैषां लक्षणं वक्ष्ये मूर्त्याभरणपूर्वकम् ।
चन्द्रनेत्रादिकां संज्ञां[4] ज्ञायतां लोकतः सुधीः ॥१६७॥

### शुद्धभैरव :

सद्यो जातोद्भवोऽयम्प्रथमगतिगनिः सत्रिकोऽरिः कपर्दी
रक्तः श्यामस्त्रिशूली[5] सिततरवसनो भस्मदेहस्त्रिनेत्रः ।

---

1. M गौण्डकाः
2 Q&R दिनादो
3. Q&V गोंड, पो॰ गुंड
4. M. ०कासं.
5. Z 1 & Z 3. धत्ते शूलाङ्कपालं

कण्ठे शृङ्गं[1] दधानः[2] श्रवणयुगलतो मुद्रिके चन्द्रचूडो[3]
हेमन्तेऽपि प्रभाते विलसति वृषपो[4] भैरवः शुद्धपूर्वः ॥१६८॥

इति शुद्धभैरवः ।

**धन्नासी :**

सर्वाङ्गे भूषणाढ्या धनिरिगविधुगा सत्रिकाऽस्ता रिधाभ्यां[5]
दूर्वाश्यामा विचित्राम्बररचिततनुर्दाडिमी पुष्पहस्ता ।
नेत्रान्तर्बाष्पयुक्ता[6] धवलसहच ी पूर्वजे[7]-राकनाम्नः (म्नी)
पश्यन्ती गीतवर्त्मोषसि बहुधनदा धन्यधन्नासिका सा ॥१६९॥

इति धन्नासी ।

**भैरवी**

धन्नासीमेलजाता स्वरसकलयुता चादिमध्यान्तषड्जा
तन्वङ्गी चन्द्रवक्त्रा कनकसमतनुश्चित्र[8]- वस्त्रन्दधाना ।
भाले सिन्दूरबिन्दुर्विकसितवदना सर्वशृङ्गारकाढ्या,
नृत्यन्ती गीयमाना द्रविडजनरता भैरवी सा प्रभाते ॥१७०॥

इति भैरवी ।

**सैन्धवी**

भैरव्या मेलजाता स्वरसकलरता सत्रिका चन्द्रवक्त्रा
तन्वङ्गी पद्मनेत्रा विपुलसुजघना मत्तमातङ्गयानी[9] ।

---

1. R&V शृङ्ग
2. Z1&Z 3 च मौलं
3. V&Z1 जूडोजूट
4. वृषपे, Z 3 वृषभो
5. Q स्तरिधाम्यः
6. R मुक्ता
7. R जें०
8 Z1; Q, V&Z श्वेत
9. Z1&Z 3. ०ना

मन्दम्मन्दं वदन्ती बहुविधगमकैः सैन्धवी रक्तवस्त्रा[1]
युद्धे योधेश्वराणां विमलतरयशः प्रार्थयन्ती सदा सा ॥१७१॥

इति सैन्धवी ।

### मारवी

चन्द्रास्या दीर्घकेशी त्वनलगतिनिगा सत्रिकाऽस्ता रिधाभ्यां
हेमाभा दीर्घरूपा बहुविधकुसुमैर्भूषिता स्निग्धनेत्रा[2] ।
मेवाडस्याग्रजाता (याता ?)[3] मृगशिशुनयनी रक्तवस्त्रन्दधाना ।
चेषद्धास्या[4] स्तुवन्ती[5] युधि नृपतिगणान् मारवी सा सदैव ॥१७२॥

इति मारवी[6] ।

### आसावरी

गान्धारोऽत्राग्निगः स्यात्प्रथमगति[7] गनिमादिमध्यान्तपूर्णा
तन्वङ्गी श्यामवर्णा करधृतमुकुरा सर्वशृङ्गारयुक्ता ।
रम्भायाः काननेषु प्रियविमलयशोऽध्यापयन्ती शुकेशं[8]
गन्धर्वैं स्तूयमाना प्रियरसकरुणा शश्वदासावरी सा ॥१७३॥

इत्यासावरी ।

### भैरवः

भस्माङ्गः कण्ठशृङ्गी श्रवणयुगलतः शङ्खमुद्रे दधानः
पादत्राणे प्रवाले[9] फणिपतिभुजटाबद्धमौलिः प्रमत्तः ।

1. Z 3 नेत्रा
2. ZI & Z3 तिग्म
3. P.,U. जाता
4. L. & Z & L3 ईषद्धास्या
5. L स्वपन्ती
6. P. माधवी
7. Q भनि०
8. P. सुकेशी
9. L. प्रवालैः

उज्जालस्यानुयायी पटुतरवचनः[1] किन्नरीं[2] वाद्यमानः
पूर्णो धाद्यन्तमध्यस्त्वनलविधुगनी भैरवः पूर्वयामे ।।१७४।।

इति भैरव : ।

**शुद्धललित :**

सांशाद्यन्तः पहीनः[3] शुचितरललितो मारवीमेलजातो
भाले धत्ते सुबिन्दुङ्कनकसमनिभं[4] शुभ्रवस्त्रन्दधानः ।
गौराङ्गश्चम्पमल्लीकुसुमभरशिराः[5] पङ्कजाक्षो विलासी
कामी ताम्बूलहस्तः प्रतिदिनमुरसि प्रार्थकः खण्डितानाम् ।।१७५।।

इति शुद्धललित : ।

**पञ्चम :**

श्यामं ताम्बूलहस्तङ्करधृतकुमुदम्मारवीमेलजातं
पत्रिञ्चार्ऽरिं सुरेश[6]-म्पिकमृदुरचनं वेणुकम्पीतवस्त्रम् ।
लिप्ताङ्गं यक्षपङ्कैः शिरसि सुमुकुटम्बालचन्द्रार्कभालं
गायन्तीह त्रिनाके[7] सकलसुरनराः पञ्चमं सुप्रभाते ।।१७६।।

इति पञ्चम : ।

**परज :**

सत्रिः सम्पूर्णकोऽसौ द्विविधुगतिगनि[8]-स्तालहस्तः सुभार्यः
पृष्ठे पैनाकपाणिर्बहुविधरचितैर्भूषणैः शोभमानः ।

---

1. L. उज्वालस्यानुयाग्री पटुतरयचनः
2. L. किन्नरी
3. Q, V, & R & Z 3 प्रवीणः
4. L कनकसनिभं
5. M. शिरः
6. ZI सुरेखं॰
7. R&Y त्रनाके
8. Z3 द्विविध

गौरो दीर्घस्वरूपी मृदुवचनपरः सर्वलोकोपकारी
नित्यं याच्यः सदार्हर्निशि च सुपरजो भाति चाग्रे नृपाणाम् ।।१७७।।

इति परज : ।

बङ्गाल :

अन्त्यो[1] गश्च स्वरौ स्तस्त्रिनयनगतिगौ सत्रिकाढ्यश्च[2] पूर्णो
वामे पाणौ सुमालां शशधरमणिभां शुभ्रवस्त्रन्दधानः[3] ।
बङ्गालः पानपात्रं विशदकनकजं सव्यहस्ताग्रभागे ।
बिद्वान् सङ्गीतवेदं[4] पठति च नितरां गद्गदैः[5] कम्पभेदैः ।।१७८।।

इति बङ्गाल : ।

इति भैरवपरिवार : ।

हिन्दो (ण्डो)ल :

अस्मिन्रागे भवेताम्प्रथमगतिगनी सत्रिकोऽत्राऽरिपो[5]ऽसौ,
गौराङ्ग पीतवासा घनकुसुमवने क्रीडको[6] दोलयाने ।
हिन्दोलः स्त्रीसहायः कटक[7] मुकुटमुक्तामहाकुण्डलाढ्य[8]
प्रातःकाले वसन्ते विचरति चतुरो वामदेवाभिजातः ।।१७९।।

इति हिन्दोल : ।

भूपाली

जाता मल्हारमेले निगरतिरहिता[9] मादिमध्यान्तरूपा
नासाग्रे स्वर्णपुष्पङ्कमलनयनयोः कज्जलङ्कण्ठमालाम् ।

---

1. Q अन्त्यांगश्च
2. R&Z.I यश्च
3. L मणिमायुक्तवस्त्र
4. R विद्वत्सङ्गीतवन्द्यः, Q विद्वान् सत्तवेदैः ?
5-5. ZI ०मङ्गहू, Q न्ना० R&ZI ऽत्र रिपौनो
6. R कामुको
7. R कनक
8. Q&ZI कुण्डलैर्दीप्यमानः
9. Z3 ०गनी

मौक्तेयम्भालमध्ये वरतरतिलकङ्कङ्कणे हस्तमूले
रक्तं वस्त्रन्दधाना त्वनवरतमदा[1] याति भूपालिका सा ॥१८०॥

इति भूपाली ।

### वराली

स्वागारे स्वेच्छया या मृदुतरवचनैः क्रीडिता चाऽलिपुञ्जै-
श्चित्रं वस्त्रन्दधाना कुसुमसुकबरीचामरैर्वीज्यमाना ।
नानाशृङ्गारयुक्ता मदनसहचरी कोमलाङ्गी सुगौरी
सायम्पूर्णा त्रिषड्जा त्वनलगतिनिमा[2] राजते सा वराली ॥१८१॥

इति वराली ।

### तोडी

सव्ये हस्ते सुदण्डं त्वपरकरतले तालयुग्मन्दधाना
लिप्ताङ्गी (ङ्गा ?) चन्दनाद्यैः सुषिरसुवदना[3] सर्वभूषाभियुक्ता ।
प्रौढा ताम्बूलवक्त्रा विकसितनयना[4] मोहिनी मुक्तहासा[5]
पूर्णा माद्यन्तमध्या प्रथमगतिगनिस्तोडिका प्रातरेव ॥१८२॥

इति तोडी ।

### प्रथममञ्जरी

जाता गौडस्य मेले धरिपरिरहिता[6] चादिमध्यान्तपा या
गौराङ्गी पीतवस्त्रा मृगमदतिलकम्भालमध्ये दधाना ।

1. Q त्वनवरस्त्रिमदा R. ०तदा
2. Z3 ०गनी
3. L&V सुशबरवसना, R सुशुभवसना
4. ZI & Z3 विकचित०
5. ZI युक्त०, M मुक्तचूणा
6. Z3 धनिपरिरहिता

हस्ते वीणैकवाद्या सरसमधुरवा[1] मुक्त[2]-केशी कुरञ्जी[3]
प्रीताऽलङ्कारयुक्ता प्रथमपदपुरा मञ्जरी सा सदैव ।।१८३।।

इति प्रथममञ्जरी ।

**तुरुष्कतोडी**

छायानाटस्य मेले प्रकटितसुतनुर्मादिमध्यान्तपूर्णा
गौराङ्गी मूर्ध्नि वेणीङ्कनकमणिमयङ्कर्णपुष्पन्दधाना ।
प्रौढेषद्रक्तनेत्रा यवनसुवनिता[4] वस्त्रवेषादिकाढ्या
द्राक्षाम्पीत्वा प्रभाते विलसति चतुरा यावनी तोडिका सा ।।१८४।।

इति तुरुष्कतोडी ।

**वसन्त :**

जातो हिन्दोलमेले स्वरसकलयुतः सत्रिकश्च प्रभाते
त्वारामे क्रीडमानो नवदलकुसुमा[5]-मोदलुब्धाऽलिवृन्दैः[6] ।
ताम्बूलास्योऽतिगौरो रतिपतिसदृशो रक्तवस्त्रश्च सार्द्धं
योषिद्भिः सर्ववाद्यारवरभंस ?[7]-महद्धास्ययुक्तो वसन्तः ।।१८५।।

इति वसन्तः ।

**शुद्धबङ्गाल :**

जातः कर्णाटमेले स्वरसकलरतो मन्त्रिकः[8] पूर्णकायः
शुभ्राङ्गः पीतवासा मणिगणरचिते कुण्डले कर्णयोः स्तः ।

---

1. Z2 सरससुमधुरा
2. Z2 रक्तकेशी
3. Q कुरङ्गी, Y कुरंजी
4. Z ▮ चनसुभजिता
5. L कुसुमो
6. Q मोंदवृद्धाऽलिवृन्दे, R. मोदलब्धा ?
7. Q सर्वविद्यारवरभस महद्, Y. सर्ववाद्याखरभसमहद्०
8. R, सत्रिको

आस्ते मौलौ किरीटङ्करतलकमलङ्कुङ्कुमालिप्तदेहः
प्रातर्याच्यः[1] प्रमत्तो युवजनसहितः शुद्धबङ्गालकोऽसौ १८६॥

इति शुद्धबङ्गाल : ।

**श्याम :**

काकल्या चान्तरेण प्रकटवरतनुः सत्रिकः पूर्णरूपः
श्यामाङ्गः पीतवासा मधुरतररवः कम्पभेदैर्विचित्रैः ।
कण्ठे रत्नैकमालो विरचित[2]-तिलकः कुङ्कुमै[3]-र्भालमध्ये
रागः श्यामाभिधानस्त्वनवरतमदः कामिनीनां विनोदः[4] ॥१८७॥

इति श्याम : ।

**सामन्त :**

कर्णाटाख्यस्य मेले प्रकटवरतनुः पूर्णरूपस्त्रिषड्जः
पद्माङ्घ्रिः पद्मनेत्रः श्रवणयुगलतः कुण्डले द्वे दधानः[5] ।
बिभ्रन्मौलौ[6] किरीटम्बहुकुसुममयङ्कण्ठमालां सुवस्त्रं
प्रातःकाले चकास्ति प्रबलगमकवान्[7] प्रौढसामन्तरागः ॥१८८॥

इति सामन्तराग : ।

**कामोद :**

कामोदः कामरूपी धृतकुमुदकरः श्वेतवस्त्रन्दधानः
कस्तूरीबिन्दुभालः कुसुमसुमुकुटः कण्ठमालादिकाढ्यः[8] ।

---

1. ZI ०र्वाच्यः
2. Z2 विलसति ?
3. ZI कुङ्कुमम्भाल
4. Q कामिनीनां विनोदैः
5. Z2 दधात्तः
6. ZI चित्रन्मौलौ
7. ZI धवलगमठान्
8 Q&V कण्ठमालाधिकाढ्यः, ZI केतुमाला०

वक्ता सद्व्यङ्ग्यवाक्यं युवजनसहितो वेत्रहस्तः प्रतापी
सम्पूर्णः सत्रिकोऽसौ विधुगतिगनिक[1]श्चापराह्णे चकास्ति ।।१८६।।

इति कामोद : ।

इति हिन्दोलपरिवार : ।

**देशिकार :**

जातोऽघोराख्यवक्त्रा त्रिगतिगनिगमाः[3] सत्रिपूर्णोऽत्र रागे
रक्ताङ्गः पद्मनेत्रः सितगजगमनो बाखरेजस्य[3] मित्रम् ।
कण्ठे मुक्तैकमालो[4] धृतमुकुटशिरश्चित्रवासा सखड्गो[5]
मध्याह्ने योधसङ्घे सुललितशिशिरे देशिकारश्चकास्ति ।।१९०।।

इति देशिकारः ।

**रामक्री**

पूर्णेन्द्वास्या सुमुक्तामणितरलगला नीलवस्त्र[6]-न्दधाना
कूर्पासं[7] रक्तवर्णं[8] करचरणयुगे कङ्कणे नूपुरौ च ।
रामक्री चञ्चलाक्षी विमलतरगिरुद्गारयन्ती[9] विदग्धा
शृङ्गाराढ्या त्रिषड्जा त्वनलगतिगनी राजते सर्वदैव ।।१९१।।

इति रामक्री ।

---

1. Z2गुणगतिमनिक., V अनलगतिनिमश्चापराह्ने, Z1; सावनलगतिनिमश्चापराह्ले॰ Y ॰गतिगनिकः
2.. Z1 त्रिगतिगनिः
3. 'देशिकारे बेखराजः' इति देशिकारस्य पारसीकनाम (रागमञ्जरी)
4 PQ & R रत्नैक
5. Z2 सुखाढ्यो
6. Z1 रक्तवस्त्रं
9. Z2 कर्णांशे
8 Z1 नीलवर्णं
9. Z1 Z1 गुरुद्गारयन्ती

**बहुली**

रामक्रीमेलहृष्टा निगपरिरहिता चादिमाद्यन्तमध्या
तन्वङ्गी श्यामवर्णा विलुठित[1]-कबरी सव्यहस्ते सुदण्डी ।
ताम्बूलास्या प्रगल्भा मरहटवनिता[2] वस्त्रभूषादिकाढ्या
नासायाम्पीत[3]-मुक्ता बहुमति[4]-बहुली शोभते पूर्वयामे[5] ॥१६२॥

इति बहुली ।

**देशी**

धम्मिले मल्लिमालां श्रवणयुगलतः कुण्डले कण्ठमालां
कूर्पासं शुभ्रवस्त्रञ्चरणकरयुगे नूपुरौ कङ्कणे च ।
आहङ्गस्य प्रपौत्री मृदुसुकरतले[6] पल्लवं सन्दधाना
गान्धारान्त्येन्दुगौ[7] स्तस्त्रिसमयरिरपा[8] सर्वदा याति देशी ॥१६३॥

इति देशी ।

**जयतश्री**

नासाग्रे श्रीलवङ्गं जलजसुतिलकं[9] कुम्भिके[10] श्रोतयोर्द्वे
चोलीं[11] कौसुम्भवस्त्रं शिशुविधुतिलकञ्चाञ्जनन्नेत्रयोश्च ।
हस्तद्वन्द्वे सुकान्त[12]म्प्रवलयनिचयम्मूर्ध्नि वेणीन्दधाना
देशीमेले[13] रुचिज्ञा सकलसुजयतश्रीस्त्रिसा चापराह्ने ॥१६४॥

इति जयतश्री ।

---

1 Q विलुलित
2. ZI ०भणिता
3. ZI पीन
4. ZI बहुगति
5. Z चापराह्ने, Q पूर्णयामे
6. L ०मुकर०
7. ZI मेलस्था चात्मभर्तुः
8. M रिषभा
9. L&Z3 मुटिलिके, R मुटिलिके
10. U खुंभिके
11. Z₁ चोलं
12. L & ZI सुकाच०
13. Z3 भर्तुमेलः

## गूर्जरी

सन्धत्ते हस्तमूले करिरदवलयान्यङ्घ्रिमञ्जीरयुग्मं
नासाग्रे हेमपुष्पङ्कनकसम[1]-निभङ्कञ्चुकीं रक्तवस्त्रम् ।
बिम्बोष्ठी गौरवर्णा द्विवसुसुरचिता मुक्तकस्थायभावा[2],
रामक्रीमेलसौख्या त्रिसमयरिरसौ[3] (युता? ) गूर्जरीयम्प्रभाते ॥१६५॥

इति गूर्जरी ।

## ललित :

जातस्तातस्य[4] मेले स्वरसकलयुतो धत्रिकश्चञ्चलाक्षो
हस्ते पद्मन्दधानः शुचिवसनरतो श्लिष्टशृङ्गारसर्वः ।
मुग्धस्त्री सत्समक्षे हसति सकपटम्पूर्णताम्बूलवक्त्रः
कामी कामावतारः कुटिलसुललितो भाति धृष्टः[5] प्रभाते ॥१६६॥

इति ललितः ।

## विभास :

गौराङ्गः पङ्कजाक्षः सुशबरवसनो भालकाश्मीरबिन्दुः
मल्लीस्रग्भूष्यकण्ठश्चतुरवरगिरङ्कीरमध्यापयन्यः ।
[6]-मेले तातस्यजातस्त्वधिकप्रथममः सत्रिकोऽपः शठोऽसौ-[6]
स्वेच्छागामी प्रभाते वदति विनयतां श्रीविभासाख्यरागः ॥१६७॥

इति विभास :

---

1. ZI मणि०
2. Q स्थाय्य सा वा Z2 छन्दसा वै.
3 M. ZI & Z2 शिशिरे
4. V & ZI देशीमेले०
5. ZI, 2 हृष्टः and दृष्टः
6-6. ZI. देशीमेलेभिजातो सगुणपरिचयः पूर्णरूपः शठोऽसौ.

सारङ्गः

श्यामाङ्गः पीतवासाः[1] प्रबलतरगदा[2]-शङ्खचक्राब्जहस्तो[3]
बाणैः[4] शार्ङ्गेण पूर्णः स्फुरदिषुधिकटिस्ताक्ष्यंगोभूषणाढ्यः ।
गान्धारो वेदगः स्युर्गुणगतिमनिधाः पक्षगो रिस्त्रिषड्जः
सम्पूर्णश्चापराह्णे प्रचरति चतुरो वीरसारङ्गरागः ॥१९८॥

इति सारङ्गः ।

त्रिवण: (तिरवणः)

देशीसन्मेलजातस्त्रिविधसमयसः पूर्णरूपोऽतिगौरः
कण्ठे मौक्तेयमालो धृतमुकुटशिरश्चित्रवासाश्च रम्यः ।
पुष्पश्रीकन्दुहस्तो युवजनसहितो मन्मथानन्दकर्ता
शृङ्गारी पण्यवीथ्यान्तरुणतिरवणः शोभते सायमेषः ॥१९९॥

इति तिरवणः ।

यमनकल्याण :

सत्रिः पूर्णो द्विनेत्राऽग्नियमरिगमनी राजवृन्दैः समेतो
गौरस्ताम्बूलवक्त्रः सिततरवसनः कण्ठरत्नैकमाल ।
कञ्जाक्षः छत्रमूर्द्धोभयचमर[5]-युतो रत्नसिंहासनस्थः
कल्याणो यमनाद्यः परिजनसहितो राजतेऽसौ दिनान्ते ॥२००॥

इति कल्याणः(यमनकल्याणः) ।

इति देशिकापरिवारः ।

---

1. Z3 वासो
2. Z1 सकलकरधृतः
3. Z1 खड्ग
4. Z2 पाणौ
5. Z1 & Z2 मूर्द्धोत्तरचमरयुतो

## श्रीराग :

शृङ्गारी सुन्दरस्तत्पुरुषवदनजः कण्ठनक्षत्रमालः
श्रीरागः श्वेतवासाः प्रथमगतिगताः धैवतो रिगनी स्युः ।
[1]-आरोहेऽधैवतोऽगस्त्ववगमनयुतः सत्रिपूर्णोऽत्र गौरो-[1]
ग्रीष्मे सायं सुनृत्ये विलसति सरसः हस्तलग्नाऽलिपद्मः ।।२०१।।

इति श्रीरागः ।

## गौडी

रामक्रीमेलजा या धगपरिरहिता सत्रिका षोडशाढ्या[2]
चित्रं वस्त्रन्दधाना करधृतकमला कर्णनेत्रा ? सुकेशी ।
[3]चैत्री मुल्तानिपूर्वीवर[3]-यवनपुरी कर्पटीभिश्च[4] सार्द्धं
सङ्क्रीडन्ती दिनान्ते चतुररतिकला गौरदेहा तु गौडी ।।२०२।।

इति गौडी ।

## पाडी

गौडीमेले सुलग्ना प्रथमगुणरनि[5] स्त्यक्तगा पङ्कजाक्षी
भर्तुः सन्तापहन्ता[6] स्मितविधुवदना गीतनृत्याभिषक्ता ।
गौराङ्गी शुभ्रवस्त्रा[7] तरुणतरमदोन्मत्तमातङ्गयानी
शृङ्गाराढ्या हि पाडी युवजनहृदयानन्दिनी वासरान्ते ।।२०३।।

इति पाडी ।

---

1-1. ZI & Z2 आरोहे धैवतो गश्चत्रियमधमजः सत्रि०, Z3 आरोहे गस्त्ववगमधगजः सत्रिपूर्णोतिगौरो

2. ZI षोडवाढ्या

3-3. Q&R चैत्री मुत्तानिपूर्वीचर०, ZI & Z2 चैत्रामुल्लाति पूर्वी०Z3 चैत्तीमुग्धातिपूर्वी०

4. Z[2] कर्पटा

5 Z3 प्रथमगुणरतिः

6 Z ZI &2 हन्त्री

7. R शुक्ल

### गुणकरी

गुर्जर्या मेलजाता स्फुरिततरसपा न्यादिमध्यान्तपूर्णा
वक्षोहारा यताक्षी सिततर[1]-वसना रक्तकूर्पासिका[2] यां ।
नानाशृङ्गारभूष्या मृदुमधुवचना[3]-श्यामलाङ्गी सुतन्वी-[3]
भर्तुः सङ्केतकं सद्विमलगुणकरी कामिनी याति सायम् ॥२०४॥

इति गुणकरी ।

### नादरामक्री

सम्पूर्णा सत्रिका या गुणविधुगनिगा[4] किन्नरीवाद्यहस्ता
श्यामाङ्गी दीर्घनेत्रा गुरुजलजगणैः कण्ठमालादिभूष्या ।
मध्येषद्रक्तवस्त्रा वरगजगमना स्वर्णकूर्पासयुक्ता
वक्तु[5] सायं प्रयाति प्रियचरितगुणा[6] नादरामक्रिया सा ॥२०५॥

इति नादरामक्री ।

### गुण्डक्री

गुर्जर्या मेलरक्ता रिधपरिरहिता सत्रिका नीलवस्त्रा
गौरी मुक्तालकाया[7] नवनगरचिता कामसङ्केतसंस्था ।
नीपच्छायोपविष्ठा विमलकरतले पद्मपत्रन्दधाना
गुण्डक्री भामिनी सा[8]प्रियतमपदवीं प्रेक्षती यं[9] प्रभाते ॥२०६॥

इति गुण्डक्री ।

---

1. Q वरसित
2. Z2 रक्तकेशी सुकाया
3-3. Z1 & Z2 हस्तताम्बूलयुक्ता
4. Q&R गुणविधुनिगगा
5. Z1 वक्रा Z2 वक्ता
6. Z1 गुणैः Z2 गुणं
7. Z3 ताया
8. Z1 & Z2 भाति सायं ?
9. Z3 प्रेक्षति सा, M प्रेक्षति यं, Q & V प्रेक्ष्यन्ती

**टक्क :**

नृत्यासक्तः सहिष्णुर्नयन[1]गतिगनिः सादिमध्यान्तपूर्णो
वक्षोहारं सुरत्नं[2] सुकटकमुकुटञ्चित्रवस्त्रन्दधानः ।
गौरः कामी सुटक्को मदनमदभरश्चन्दनालिप्तदेहः
पुष्पाणाङ्कन्दुहस्तो विचरति चतुरः कामदूतः सदाऽसौ[3] ।।२०७।।

इति टक्कः ।

**देवगान्धारः ।**

गान्धारो देवपूर्वस्त्वनलगतिगनिः सत्रिकः पूर्णरूपो
नैरन्तर्यञ्चकास्ति प्रथमगतिरिधो रत्नसिंहासनस्थ ।
इन्द्राद्यैः स्तूयमानो रसपतिरसिकश्चन्दनाऽऽलिप्त देहः[4]
शुभ्रं वस्त्रन्दधानः करधृतकुमुदः सर्वभूषाभियुक्तः ।।२०८।।

इति देवगान्धारः ।

**मालव :**

गौडीमेले प्रजातो रिपपरिरहितो[5]-न्यादिमध्यान्तपूर्णो-[5]
बीरः शृङ्गारनिष्ठो वरशुकरुचिभा[6] मूसलीकस्य मित्रम्[7] ।
पद्मास्यः पद्मनेत्रः सिततरवसनः कण्ठमालादिभूष्यः
सायङ्काले सभायाम्प्रकटति चतुरो मालवो रागराजः ।।२०९।।

इति मालव ।

1. Z3 समयगति०
2. Z3 सरत्नं
3. Z3 दिनान्ते
4. Z3 चन्दनाप्तिसुदेहः
5. Z1 & Z2 सो निमध्यान्तपूर्वो M&R वामिमध्यांतपूर्णो
6. Z2 नरपतिसदृशो
7. रागमञ्जर्यां मालवरागस्य समता मुसलीकनाम्नी पारसीयरागेण ग्रन्थकृता प्रकटितास्ति ।

**शुद्धगौड :**

गुण्डक्रीमेलजातो रसपतिसहितो[1] न्यादिमध्यान्तको यः[2]
कौसुम्भीकेशराणां विमलजल[3]-कर्णश्चित्रितः श्वेतवासः ।
काश्मीरस्योद्र्ध्वपुण्ड्रः सुरभितसुतनुः कण्ठकञ्जाक्षमाल
स्ताम्बूलास्यो दिनान्ते हरिभजनपरः शोभते शुद्धगौडः ॥२१०॥

इति शुद्धगौड : ।

**कर्णाटबङ्गाल :**

बङ्गालान्तश्च कर्णाट इति रिरहितो गादिमध्यान्तकोऽयं
गौडीसन्मेलभूतः कमलकरतले पुष्पयष्टिन्दधानः ।
गौराङ्गः शुक्लवासाः कटकमुकुटकेयूरकाण्ठेयकाढ्यः[4]
कौसुम्भोष्णीषधारी[5] परिजनसहितो याति पूर्वाह्नकाले ॥२११॥

इति कर्णाटबङ्गालः ।
इति श्रीरागपरिवारः ।

**शुद्धनाट :**

ईशानास्याभिजातस्त्रिगतिगनिरिधः सत्रिपूर्णः सुधीरो
रक्ताङ्गः कञ्जनेत्रः[6] सिततरवसनः[7] कण्ठमालादिकाढ्यः ।
[9]पाणौ खड्गः प्रतापी स्मितवचनपरः स्निग्धगम्भीरनादः[9]
सन्ध्यायां राजमार्गे शरदि हयगती राजते शुद्धनाटः ॥२१२॥

इति शुद्धनाटः ।

---

1. Z3 रसपतिरहितो
2. Z1 & Z3 ऽपः
3. Z8 ०तरकर्णः
4. Z1 & 2 काण्डेयकाढ्यः
5. Z2 ०त्रेषधारी, M कौसुम्मुष्णीषधारी
6. Z3 स्निग्धनेत्रः
7. Z3 शुचिवरवसना
8. Z3 स्निग्धगम्भीरनादः
9-9. Z3 खड्गं खेटं दधानो रिपुकुलदलनो हारहारी मनस्वी

### मालवश्री :

जाता श्रीरागमेले नवगिरिरचिता सादिमध्यान्तिका या
श्रीखण्डापङ्कचोलीं कुसुमसुवसनं सन्दधाना मृगाक्षी ।
प्रौढेषद्व्यङ्ग्यवाक्यैः[1] प्रियमुपहसती मालवश्रीः सुतन्वी
वक्राक्षी पावकर्षैश्चपलकरतलाद् भ्राम्यती[2] सा सदैव ॥२१३॥

इति मालवश्रीः ।

### देशाक्षी

गान्धाराद्यन्तमध्या गुणगतिरिनिगाः धैवतो द्विर्गतीर्या
ताम्बूलस्याञ्जनाक्षी कनकमणिमयैर्भूषणैर्भूषिताङ्गी ।
नारायण्यङ्गलग्ना कुसुमसुकबरीकञ्चुकीचित्रवस्त्रा
देशाक्षी राजकन्या प्रतिदिनमुषसि प्रेक्षती मल्लयुद्धम् ॥२१४॥

इति देशाक्षी ।

### देवक्री

गौरी श्रीकोमलाङ्गी कजमुकुलकुचा चित्रकूर्पासवस्त्रा
सर्वाङ्गे भूषणाढ्या मृदुतरवचना शोकपूर्वा[3] प्रगल्भा ।
बेलावल्यैकमेलाधिकविधुगतिमा सत्रिका वा पहीना
देवक्री देवकन्या बहुचतुरतरा राजतेऽह्नोन्त्ययामे[4] ॥२१५॥

इति देवक्री ।

### मधुमाधवी

मुग्धा गौरी बिचित्राम्बरतनुरचिता सर्वशृङ्गारयुक्ता
माद्यन्तांशाऽरिधा वा द्विगतिगतरिधा वह्निगत्यन्त्यगश्च ।

---

1. Z3 प्रौढेसद् व्यङ्गवाक्यैः
2. Z1 भासती
3. Z1 & M ०वचना शाकपूर्वा
4. Q ह्री निनान्ते, L ०वचनोशाक०

भ्रूरेखा चापधर्तृ मृगशिशुनयना तीव्रनेत्रान्तवाणा[1]
भर्तुर्गेहं सखिभिः सहचरमधुमाधव्युषः सम्प्रयाति ॥२२६॥

इति मधुमाधवी ।

**आभीरी**

चन्द्रः द्विस्त्रिर्गताः स्थुर्गरिनय इह सुस्निग्धनेत्रा प्रगल्भा
श्यामाऽऽभीरी त्रिषड्जा[2]-मृदुवचनपरा मूर्ध्नि वेणीन्दधाना-[2] ।
[3]-मृद्वङ्गी नीलवस्त्रा मृदुगलविलसद्विद्रुमालिश्च कर्णे[3]
[4]ताटङ्काढ्या हि सायं रसपतिनिनदै[4] रासदण्डै रमन्ती ॥२१७॥

इत्याभीरी ।

**जियावन्त :**

श्रीरागस्यैव मेलाद्विधविधुगतिकः सादिमध्यान्तकोऽसौ
श्यामाङ्गः पीतवासा विरचिततिलकः कुङ्कुमैर्भालमध्ये ।
कण्ठे रत्नैकमालो ललितसुमुरली[5]-वाद्यमानस्त्रिभङ्गी
शृङ्गारी भाति सायङ्कुसुमशरहतः श्रीजियावन्तरागः ॥२१८॥

इति जियावन्तः ।

**सालङ्गनाट :**

गौरस्तारुण्यपूर्णः करधृतकुलिशः सम्भृतानङ्गरूपः,
कण्ठे मौक्तेयमालः परिजनसहितः सर्वकिर्मीरवस्त्रः ।
शृङ्गाराढ्यः सुकामी मृदुवचनपरः षड्जमध्यादिकान्तः
प्रीतः केदारमेले दिनपतिविरतौ भाति सालङ्गनाटः ॥२१९॥

इति सालङ्गनाटः ।

1. Q वाणी
2.2 Z। कठिनकुचतटे हारयष्टिन्दधाना
3-3. Z। चण्डी सन्नीलवस्त्रा धृतमुकुरगलद्रक्तताम्बूलपूर्णा
4-4. Z। सायं सञ्चारिणीभिः सहब्रदुनिनदै
5. Q मुहली

कर्णाट :

शृङ्गारी पीतवस्त्रः कटकमुकुटसिंहासनःछत्रयुक्तः
गौराङ्गः श्रीहुसैनी सुहृदभिमदघः पूर्यवागेश्वरीष्टः ।
[2]त्रिस्त्रिद्व्येकस्थिताः स्युः स्वररिधगनयः[1] [2]-केकिकण्ठाभकोऽसौ
न्याद्यन्तांशोऽ[3]रिधोवा विलसति दिवसान्तेऽपि कर्णाटरागः ॥२२०॥

इति कर्णाटः ।

छायानाट :

कर्णाटस्य प्रमेले प्रकटितसुतनुस्त्वादिमध्यान्तषड्जः
कण्ठे हारः सरत्नः सितवसनरुचिः पाटलोष्णीषधारी[4] ।
गौराङ्गो रक्तनेत्रः सहचरबहुभिर्वीरशृङ्गारवान्यः
छायानाटो दिनान्ते प्रहसति पथिकान् पुष्पसत्कन्दुहस्तः ॥२२१॥

इति छायानाट : ।

हम्मीरनाट :

सम्पूर्णो द्विगतीरिस्त्वनलगतिनिगः सग्रहन्यासकांशः
शृङ्गारी यौवनाढ्यः स्मितपरवदनः कन्दुसद्दण्डहस्तः ।
गौरस्ताम्बूलवक्त्रो कुसुमशरसुहृद्रक्तवस्त्रः प्रतापी
चेतः सीमन्तिनीनामनुसरति हमीरादिनाटो हि सायम् ॥२२२॥

इति हम्मीरनाटः ।

इति शुद्धनाटपरिवारः ।

---

1. Q रिगधनयः
2-2. Z3 द्विद्वित्र्येकस्थिताः स्युः स्वरा रिधगनयोः
3. Q पाद्यन्तोशोंऽरिवोवा
4. Z3 पाटलोश्लीष

### नट्टनारायण :

मुग्धः स्त्रीसङ्गतो द्विर्गतिरिधगनयः[1] पूर्णसाद्यन्तमध्यो
रुद्राणीवक्त्रजातः शिखिकुलनटिनीनर्त्तको भूषणाढ्यः।
श्यामाङ्गः पीतवस्त्रः करधृतचपलाकान्तिखड्गो दयावान्
प्रावृट्काले नृणांशं प्रकटयति सदा नट्टनारायणोऽयम् ॥२२३॥
इति नट्टनारायणः ।

### बेलावली

धित्तां धित्तां धित्तां तामिति मृदुमुरजं वाद्यमाना सुतन्वी,
शृङ्गाराढ्या सुगौरी कमलवसनकिर्मीरकूर्पासयुक्ता।
प्रौढा बेलावली योषसि ? निजमधुमाधव्यशेषस्वरस्था
धाद्यन्तांशाऽरिधा[2] वा सरपरदसुता सत्कुरायी[3]-सहाया ॥२२४॥
इति बेलावली ।

### काम्बोजी

काम्वोजी मोहिनी या द्विगतिगनिरिधा सत्रिकाढ्याऽनिमावा,
गौरी ताम्बूलवक्त्रा कुसुमजवसना कञ्चुकीमादधाना ।
कस्तूरीबिन्दुभाला कनकमणिमयैर्भूषणैर्भूषिताङ्गी
कर्णाट्याङ्घ्री सखीभ्यामुषसि विलसती किन्नरीवाद्यहस्ता ॥२२५॥
इति काम्वोजी ।

### सावेरी

धाद्यन्तांशाऽसपा या नयनगुणगती चात्र धान्त्यौ रिगौस्तः
कस्तूरीबिन्दुभाला मृगशिशुनयना चन्द्रवक्त्रा सुतन्वी ।
सावेरी हारकण्ठा सुशबरवसना पीतकूर्पासयुक्ता
द्व्यष्टाढ्या श्यामवर्णा वरगजगमना सस्मिता सायमेति ॥२२६॥
इति सावेरी ।

---

1. रिगधनय., Q द्विर्गतिरिधानयः Y द्विगतिरिगधनयः
2. Z3 ऽरिपा वा
3. रागमञ्जर्यां ई० 'मूर्च्छितोऽथ बिलावले' इति पाठः

### सुहवी

तन्वी श्यामा मृगाक्षी वरकमलमुखी पीतवस्त्रन्दधाना
प्रौढा सन्मूर्ध्नि वेणीं द्विजवरगमना कञ्चुकी कर्बुराञ्च ।
वक्त्रेषद्धास्ययुक्ता दशरसरचिता[1] चामरैर्वीज्यमाना
सावेरीमेलयुक्ता ह्युषसि तु सुहवी सन्त्रिका पूर्णरूपा ॥२२७॥

इति सुहवी ।

### सौराष्ट्री

सावेरीमेलरक्ता स्वरसकलयुता सन्त्रिका स्वैरिणी या
चित्रं वस्त्रन्दधाना कठिनकुचतटे कञ्चुकीम्मेचकीञ्च ।
गौराङ्गी पङ्कजाक्षी हिमकरवदना दाडिमीबीजदन्ता
सायं शृङ्गारपूर्णा मदनसहचरी याति सौराष्ट्रिका सा ॥२२८॥

इति सौराष्ट्री ।

### मल्हार :

सावेरीमेलजातः सपपरिरहितो[2] धग्रहन्यासकांशः
श्यामः पीताम्बरो यो मदनपरिचितः[3] कण्ठमालादिकाढ्यः ।
विद्युन्मेघाऽतिगर्जैरुदितशिखिगणान्नर्तयञ्जीर्णपक्षान्
बारामीजन्ममित्रो[4] ह्युषसि मलहरो भाति मल्हारराग: ॥२२९॥

इति मल्हारः

### गौड :

संस्थो मल्हारमेले स्वरसकलयुतो धैवतांशग्रहान्त्यः
श्यामाङ्गः शङ्खमुक्तावलिरचितगलो भस्मभालः किरातः ।
रम्भापत्रञ्च मौलौ धरति कटितटे बर्हिणाम्बर्हजालं
भक्त शम्भोः प्रभाते सुकरशरधनू राजते गौडरागः ॥२३०॥

इति गौडः ।

---

1. सघता
2. Z3 समपरिरहितो
3. Z2 चदनविरचित ?
4. Z3 रा० मंजर्यां "वारा मल्हाररागके" इति पाठः ।

केदार :

सव्ये दण्डन्त्रिशूलन्त्वपरकरतले शुभ्रवस्त्रन्दधानो
भस्माङ्गो रक्तनेत्रो विमलसुजटिलो द्वीपिचर्मोपविष्टः ।
नासाग्रे दत्तदृष्टिर्गिरिपजपपना वेष्टितः शिष्यवर्गैः
केदारो चाऽरिपोऽस्ति त्रिविधनिसुहृवीमेलजातो निशीथे ॥२३१॥

इति केदारः ।

शङ्कराभरण :

गौरो रक्ताम्बरोऽसौ गुरुजलजवरश्रेणिकण्ठः[1] सुरूपी
शृङ्गारी यक्षपङ्कै[2]-र्विरचितसुतनुर्भालभस्मैकपुण्ड्रः ।
नृत्यारम्भप्रियो मुद्रितसुगमकवान् शङ्कराभूषणाख्यः
प्रातः साद्यन्तमध्यः प्रचरति मधुमाधव्यशेषस्वरस्थः ॥२३२॥

इति शङ्कराभरणः ।

विहागड :

गौरः सुश्वेतवस्त्रः सुरभितसुतनुर्हस्तताम्बूलधारी
कामी पुष्पेषु धन्वी विरहिजनमनोवेधकः[3] सत्रिकाढ्यः ।
चम्पाजातीसुयूथीविरचितमुकुटः कण्ठमल्ली सुभालः
सायङ् केदारमेले जनिरुपविलसद्यो विहादिर्गडः स्यात् ॥२३३॥

इति विहागडः ।

इति नट्टनारायणपरिवारः ।

अनन्तरागाः सन्त्यन्ये नानादेशजनाश्रिताः ।
एतेषामुपरागाः स्युरुह्यन्तान्ते च तद्विदैः ॥२३४॥

---

1. Z2 श्रोणि०
2. Z2 पक्षिपङ्कैः, Z3 वक्ष्यकम्पैः
3. Z1 विरहजनमनोद्वेगकः, Z2 विरतिजनमनो वेधकः

## गानम्

धातुमातुर्विदा येन रचितं लक्षगान्वितम् ।
देशीरागादिषु प्रोक्तङ्गीतन्तद्गानमुच्यते ॥२३५॥

## गानभेदौ

अनिबद्धन्निबद्धञ्च द्विधा तद्गदितम्बुधैः ।
अनिबद्धमबन्धत्वादालप्तिः सा पुरोदिता ॥२३६॥
अङ्गैश्च धातुभिर्बद्धन्निबद्धन्त्वधुनोच्यते ।
प्रबन्धो रूपकं वस्तु तस्य संज्ञात्रयम्भवेत् ॥२३७॥

## प्रबन्धावयव :

धातुः प्रबन्धावयवश्चतुर्धा स प्रकीर्तितः ।
गीतमुद्ग्राह्यते चाऽदौ तेनोद्ग्राहस्तु पूर्वभाक् ॥२३८॥
मेलापको द्वितीयः स्यादुद्ग्राहध्रुवमेलनात् ।
ध्रुवत्वाद्ध्रुवसंज्ञस्तु तृतीयो भाग उच्यते ॥२३९॥

आभोगः पञ्चमो भागो गीतपूर्णत्वसूचकः ।
ध्रुवाऽभोगान्तरे कश्चि [द्] धातुरन्योऽन्तराभिधः ॥२४०॥

स तु सालगसूडस्थरूपकेष्वेव दृश्यते ।
चतुर्धातुस्त्रिधातुश्च द्विधातुश्चेति स त्रिधा ॥२४१॥

आभोगमेलापकयोः क्वचित्क्वचिदभावतः ।
षडङ्गानि प्रबन्धस्य स्वरश्च बिरुदम्पदम् ॥२४२॥

तेनकः पाटतालौ च पुंसो नेत्रादिकाङ्गवत् ।
तत्र तेनपदे नेत्रे स्तः पाटबिरुदे करौ ॥२४३॥

तालस्वरौ च तत्पादौ प्रबन्धगतिहेतुतः ।
तेनतेनेति तेनः स्यान्मङ्गलस्य प्रकाशकः ॥२४४॥

पदमर्थद्योतकञ्च पाटो वाद्याक्षरोत्करः ।
बिरुदङ्गुणनामानि तालश्चञ्चत्पुटादिकः ॥२४५॥
स्वरः सरिगमादिः स्याद्यथायोग्यनिवेशनम् ।

**प्रबन्धजातयः**

प्रबन्धजातयः पञ्च षड्भिरङ्गैश्च मेदिनी ॥२४६॥

आनन्दिनी पञ्चभिः स्याच्चतुर्भिर्दीपनी तथा ।
अङ्गैस्त्रिभिर्भावनी स्याद् द्वाभ्यान्तारावली स्मृता ॥२४७॥

**प्रबन्धभेदाः**

अनिर्युक्तश्च निर्युक्तः प्रबन्धो द्विविधो मतः ।
अनिर्युक्तस्त्वनियमान्निर्युक्तो नियमाद्भवेत् ॥२४८॥

अनुक्तछन्दो[1](?) गीतादौ गणवर्गान् क्रमाद्ब्रुवे ।
मयौ रसौ तजभना अष्टौ वर्णगणास्त्रिकाः ॥२४९॥

मरित्रगो भूमिजः श्रीदो योलाद्यो वृद्धिकृद् कजः ।
रोऽग्निजो भस्मकृन्मध्यो लो सो वाऽन्त्योगश्चालिकृत् ॥२५०॥

[2]-तोऽन्त्यलोऽधनकृच्छून्यो[3] जः सौर्योऽन्तर्गरुक्प्रदः-[2] ।
भः सौम्यः कीर्तिकृद्गादिर्न ऐन्द्रः शङ्करस्त्रिलः ॥२५१॥

उद्ग्राहादौ ध्रुवादौ चाऽऽभोगादौ सुकरङ्गणम् ।
केऽप्याहुः सतयोरेकस्तत्रास्तु न रजौ तथा ॥२५२॥

एवमेकैकगणतः फलान्याहुर्विपश्चितः ।
गणयोर्युग्मतः केचिदाहुः फलानि तद्यथा ॥२५३॥

मनौ हितौ भयौ[4](?) भृत्यावुदासीनौ जतौ मतौ ।
रसावरीति[5] विज्ञेयौ[6] यद्यद्योगफलन्तथा ॥२५४॥

---

1. V अनुकृच्छन्दो
2-2. Q तोन्त्यलो वरजः शून्योजः सौर्योन्तर्गरुक्प्रदः
3. V. तुच्छो
4. Q&R भनौ
5. Q रसावराति
6. Q विज्ञेया

मङ्गलम्मित्रयोर्योगे भृत्ययोस्तु बलम्भवेत् ।
उदासीनद्वये व्याधिः शत्र्वो[1]-र्नायकनाशनम् ॥२५५॥

जयोर्मित्रानुचरयोः संसिद्धिर्भृत्यमित्रयोः ।
मित्रोदासीनयोः कष्टं दुःखन्तू[2]-दासमित्रयोः ॥२५६॥

मित्रशत्र्वोः पीडनं स्यान्निष्फलं[3] शत्रुमित्रयोः ।
भृत्यो[4]-दासीनयोर्हानिरापत्तूदासभृत्ययोः ॥२५७॥

उदासवैरिणोर्वैरं शत्रूदासीनयोः क्षयः ।
हृत्कम्पम्भृत्यशत्र्वोश्च शत्रुभृत्योर्गृहक्षयम् ॥२५८॥

केचिन्मात्रागणान्पञ्च प्राहुस्ते छपचास्तदौ ।
स्युः षट्पञ्चचतुस्त्रिद्विसङ्ख्यमात्रायुताः क्रमात् ॥२५९॥

अर्जुनोऽपि गणश्रेष्ठान् त्रीनन्यान्प्राह तद्यथा ।
द्विः त्रिश्चतुर्वर्गगणांश्चत्वारोऽष्टौ च षोडश ॥२६०॥

क्रमाद्रतिगणाः[5] कामगणाः बाणगणाः स्मृताः ।
किन्तु तत्र लपूर्वा ये तेष्वादावधिको लघुः ॥२६१॥

वर्णानामष्टवर्गाः स्युरकचटतपा यशौ ।
नवपञ्चेषु पञ्चेषु पञ्चवेदाब्धिवर्णकाः ॥२६२॥

सोमो भौमो बुधो जीवः शुक्रः शौरी रविस्तमः ।
क्रमादकचटानान्तपयशानाञ्च देवताः ॥२६३॥

वर्णाना (वर्गाणा-)ञ्च फलान्याहुरायुस्तेजोऽपकीर्तिता ।
सौभाग्यं सुन्दरं व्याधिर्मरणं शून्यता क्रमात् ॥२६४॥

1. V: द्विषोर्ना०
2. Q रुदास
3. Q स्यादापद्व्युदासमित्रयोः
4. Q मित्रो
5. Q क्रमादतिगणा

हजयवधरषभाः ? (ङञणपनमविज्ञेयाः) पञ्चवर्णाऽनुनासिकाः ।
कदाचिच्छ्लोकगीतादौ न प्रयोज्याः विचक्षणैः ॥२६५॥

क्वचिदन्यैर्विशेषश्च कथितः सोऽभिधीयते ।
नकारो नाशयेल्लक्ष्मीं हकारस्तु हरेद्यशः ॥२६६॥

मकारः[1] सर्वहृत्तस्माद्गीतादौ तत्परित्यजेत् ।
सदाशिवः फलम्प्राह प्रतिवर्णं पृथक्पृथक् ॥२६७॥

अकारादिस्वराणाञ्च प्रयोगो धुरि शोभनः ।
कात्सुकीर्तिः खुरी (क्षु?) खाच्च गाद्ग्रामोऽरिभयङ्घतः ॥२६८॥

ङाल्लक्ष्मी चात्सदश्वश्च छाच्छत्रञ्जात्स्त्रियो मृतिः ।
झात्तथा स्वमृतिर्ञाच्च टाद्गावष्ठाद्विषम्फलम् ॥२६९॥

डाच्छोको ढात्सुवर्णञ्च णकाराद्रत्नमुत्तमम्[2] ।
तात्तारं थाद्बहुधनन्दाच्छ्रेयो[3] धान्महापदः ॥२७०॥

नान्नाशो भारती पाच्च फाद्भोगो बान्महद्भयम् ।
भाद्भीतिर्मृतिर्माच्च यकाराद्राजतो मृतिः ॥२७१॥

रकाराच्छत्रुतो हानिर्लवौ पुत्रधनप्रदौ ।
सर्वत्र शून्यता शाच्च षात्क्षत्रन्तुमुलन्तथा ॥२७२॥

सकाराच्छविसाम्यं[4] स्याद्धकारस्तु हरेद्यशः[5] ।
क्षप्रकारात्मा(क्षत्रज्ञात्मा?)[6] शुभःस्यात्तः श्रीर्लक्ष्मीरतिशोभनः ॥२७३॥

---

1 L सकारः
2. L. णाद्रक्तरुचिराननै ?
3. L दाद्योषो
4. Q च्छवित्रि
5. L हरेयशः
6. Q क्षय अात्मा, R क्षयवान्माशुभः

पाते [1]ऽभिवादने चैव नकारः शोभनः स्मृतः ।
हरिसंज्ञो हकारश्च जकारो जय[2]-वाचकः ॥२७४॥

निषेधवाचकोऽप्यत्र न निन्द्यः काव्यकोविदैः ।
उद्ग्राहे नगरांश्चैवमन्तरे सतलाँस्तथा ॥२७५॥

आभोगे हटकांश्चैव नववर्णान्परित्यजेत् ।
उद्ग्राहे तु दकारश्च भकारश्चान्तरे तथा ॥२७६॥

आभोगे तु चकारश्च त्रयं लक्ष्मीफलप्रदम् ।
गणवर्णविचारोऽयं नृस्तुतावेव[3] नाऽन्यतः ॥२७७॥

### सूडप्रबन्धः

एलाकरणढेङ्कीभिर्वर्तन्या झोम्वडेन च ।
लम्भरासैकतालीभिः शुद्धसूडोऽष्टभिः स्मृतः ॥२७८॥

### आलिप्रबन्धाः

वर्णो वर्णस्वरो गद्यङ्कैवाडश्चाङ्कचारिणी ।
कन्दस्तुरगलीला च गजलीला द्विपद्यपि ॥२७९॥

चक्रवालः क्रौञ्चपदः स्वरार्थो ध्वनिकुट्टनी ।
आर्या गाथा द्विपथकः कलहंसश्च तोटकः ॥२८०॥

घटो वृत्तम्मात्रिका च तथा रागकदम्बकः ।
पञ्चतालेश्वरस्तालार्णव इत्यालिसंज्ञकाः ॥२८१॥

प्रबन्धाः स्युः क्रमादत्र विंशतिश्चतुरुन्नताः ।

### विप्रकीर्णाः

श्रीरङ्गः श्रीविलासः स्यात्पञ्चभङ्गिरतः परम् ॥२८२॥

---

7. Q पानो, R याने V. माने

8. L य०

3. Q तस्तुभावेव

पञ्चाननोमातिलकौ त्रिपदी च चतुष्पदी ।
षट्पदी वस्तुसंज्ञश्च विजयस्त्रिपथस्तथा ॥२८३॥

चतुर्मुखः सिंहलीलो हंसलीलोऽथ दण्डकः ।
झम्पटः कन्दुकः स्यात् त्रिभङ्गिर्हरिविलासकः ॥२८४॥

सुदर्शनः स्वराङ्कः श्रीवर्द्धनो हर्षवर्द्धनः ।
वदनञ्चच्चरी चर्या पद्धडी राहडी तथा ॥२८५॥

वीरश्रीर्मङ्गलाचारो धवलो मङ्गलस्तथा ।
ऊर्वी (ओवी) लोली ढोल्लरी च दन्ती षट्त्रिंशदित्यमी ॥२८६॥

प्रबन्धाः विप्रकीर्णाख्याः सालगस्तु ध्रुवादयः ।
आद्यो ध्रुवस्ततो मण्ठः प्रतिमण्ठो निसारुकः ॥२८७॥

अड्डुतालस्ततो रास एकतालीति सप्त ते ।

एलाप्रबन्धस्य सामान्यलक्षणम्—

तत्रैलाप्रथमे पादे कार्यङ्खण्डद्वयम्बुधैः ॥२८८॥

वर्णसाम्यन्तदैकेन धातुना भिन्नमातुकम् ।
गमकाख्यप्रयोगस्तु कर्तव्यस्तदनन्तरम् ॥२८९॥

पदत्रयञ्च कर्तव्यं तच्च पल्लवसंज्ञकम् ।
विलम्बिते तु तत्राऽऽद्ये तृतीयन्द्रुतमानतः ॥२९०॥

तुल्यधातुकमेवञ्चेद्गेयम्पादत्रयम्बुधैः ।
तृतीयाङ्घ्रौ विशेषोऽयन्न पल्लवपदस्थितिः ॥२९१॥

प्रयोगोऽन्यस्तु कर्तव्यः सम्बोधकपदान्वितः ।
पादत्रयात्मकश्चैवमुद्ग्राहोऽर्कपदान्वितः ॥२९२॥

मेलापकः प्रयोगश्चेत्तदा रुद्रपदान्वितः ।
प्रभुनामाङ्कितो मध्यविलम्बितपदत्रयः ॥२९३॥

ध्रुवो भवेत्तत्र पूर्वमेकधातुपदद्वयम् ।
तृतीयम्भिन्नधातुः स्यादाभोगस्तदनन्तरम् ॥२९४॥

कार्यो वाग्गेयकारेण स्वभिधानविभूषितः ।
पुनर्गानं विधायाऽस्य न्यासस्तु ध्रुवके भवेत् ॥२९५॥

मण्ठद्वितीयकङ्कालप्रतितालेषु कश्चन ।
तालोऽत्र विनियोक्तव्यो ग्रहस्तु विषमो भवेत् ॥२९६॥

प्रबन्धेऽस्मिन्प्रभोः कार्यं शौर्यधैर्यादिवर्णनम् ।

एलापदनामानि ।

काममन्मथवत्कान्तजितमित्र(मत्त-) विकारिणः ॥२९७॥

मान्धातृसुमतीशोभिसुशोभी गीतकोरुतः[1] (चितौ) ।
विचित्रो वासवमृदुसुचित्रा इति षोडश ॥२९८॥

नामान्येलापदानां स्युः षोडशानामनुक्रमात् ।

एलापदप्राणाः

समानो मधुरः सान्द्रः कान्तो दीप्तः समाहितः ॥२९९॥

अग्राम्यः सुकुमारश्च प्रसन्नौजस्विनाविति ।
मान्धात्रादिपदेषु स्युः प्राणा दश दशस्विमे ॥३००॥

निर्वर्णगमकप्रौढः समानो प्राण उच्यते ।
मधुराख्यस्तु सरलतानीकरणसम्भवः ॥३०१॥

धातुतो मातुबाहुल्यः सान्द्रस्तारगतिः स्मृतः ।
मन्मथोद्दीपनध्वानरक्तिता कान्त उच्यते ॥३०२॥

तारस्थानोच्चनादो यः स दीप्त इति कथ्यते ।
सवर्णगमकप्रौढः स्थायिस्थस्तु समाहितः ॥३०३॥

वाक्यावयववर्णा ये पूर्वपूर्वपदान्तिमाः[2] ।
द्वयोर्द्वयोस्त्रयाणाञ्चोत्तरोत्तरपदादिमाः ॥३०४॥

---

1. Q हतः, R & P रुतः (सं.र. चितौ 4/43)
2. L न्विताः

तत्तत्स्वरयुतावर्णावृत्या द्विविधया पुनः ।
प्रगीयते चक्रवालरीत्याऽग्राम्य उदाहृतः ॥३०५॥

सुकुमारो वर्णतानस्वराणाङ्कोमलत्वतः ।
प्रसन्नः स्यात्पदस्थानस्वरादीनाम्प्रसादतः ॥३०६॥

समासतानबहुल ग्रोजस्वी परिकीर्तितः ।
एभिः सर्वगुणैर्युक्ता विष्णुमाररमात्मिका[1] ॥३०७॥

एलाः श्रोतुः प्रयोक्तुश्च धर्मकामार्थसिद्धिदाः ।
एला सामान्यलक्ष्मैतत् पूर्वाचार्यैरुदीरितम् ॥३०८॥

**एलाभेदाः**

गणमात्रावर्णदेशसङ्कीर्णात्साप्यनेकधा ।
ग्रन्थविस्तरभावेन न मयात्र प्रदर्शिताः ॥३०९॥

**एलालक्षणम्**

ग्रयम्प्रबन्धो निर्युक्तस्तालादिनियमात्पुनः ।
चतुर्धातुस्त्रिधातुर्वा मेलापाभावतो यदा ॥३१०॥
पदतालद्व्यङ्गबद्धाज्जातिस्तारावली भवेत् ।

**करणप्रबन्धः**

उद्ग्राहः स्वरबद्धश्च ध्रुवः सर्वाङ्गमिश्रितः ॥३११॥

यस्याऽभोगः पदैः कार्यस्तत्र नेतृप्रबन्धयोः ।
गातुर्नामाङ्कितः किन्तूद्ग्राहस्त्विष्टस्वरे भवेत् ॥३१२॥

ग्रंशस्वरे च न्यासः स्यादादितालो द्रुतो लयः ।
सामान्यलक्षणम्प्रोक्तङ्करणस्य मुनीश्वरैः ॥३१३॥

एकैकाङ्गप्रबद्धः स्याद्ध्रुवकः करणे यदि ।
तत्तदङ्गाभिधानन्तत्करणं स्यात्तदा पुनः ॥३१४॥

स्वरैश्च पाटैरुद्ग्राहो यदा पादैः पदैर्ध्रुवः ।
तदा तच्चित्रकरणङ्कोहलादिकसङ्गतम् ॥३१५॥

---

1. मारः = कामदेवः

स्यान्मिश्रकरणञ्चाऽथ स्वरपाटकतेनकैः ।
बद्धो ध्रुवस्तदा शेषलक्षणम्पूर्ववत् स्मृतम् ॥३१६॥

अयन्तु तालनियमान्नियुक्तश्च त्रिधातुक ।
त्यक्त[1] तारावलीजातिर्मदन्यादिकजातिमान् ॥३१७॥

इति करणम् ।

**ढेङ्कीप्रबन्ध :**

यत्रोद्ग्राहस्य पूर्वार्द्धङ्गीयते द्विर्निरन्तरम् ।
उत्तरार्द्धं सकृत्पश्चात्प्रयोगात्मा भवेन्न वा ॥३१८॥

मेलापकाख्यश्चोद्ग्राहमेलापौ तावतालकौ ।
अथवा ढेङ्किकाताले कङ्काले वा विलम्बिते ॥३१९॥

ध्रुवाभोगौ तु गातव्यावन्यतालाल्लयान्तरे ।
ध्रुवस्त्रिखण्डःखण्डे द्वे गीयेते समधातुनी ॥३२०॥

तृतीयमुच्चमेषद्भिः सकृदाभोगकस्ततः ।
पुनर्गीत्वा ध्रुवे न्यासो यस्यां सा ढेङ्किका मता ॥३२१॥

सामान्यलक्षणञ्चैतत् ढेङ्किकाया प्रकीर्तितम् ।
विशेषा बहुधा नोक्ता मुक्तावल्यादिकाभिधाः ॥३२२॥

अयं ढेङ्कीप्रबन्धस्तु मेलापकविकल्पतः ।
त्रिधातुश्च चतुर्धातुर्यदानियमतालतः ॥३२३॥

अनियुक्तश्च नियुक्तो ढेङ्की कङ्कालदर्शनात् ।
तारावलीजातिमांश्च पदतालाङ्गबद्धतः ॥३२४॥

इति ढेङ्की ।

**वर्त्तनी प्रबन्ध :**

यल्लक्षणं स्वराद्यस्यकरणे ह्युदितम्पुरा ।[2]
वर्त्तन्या अपि तत्सर्वन्तालोन्यो रासकाद्भवेत् ॥३२५॥

---

1. L त्यज्य ?
2. Q सूदिम्पुरा

विलम्बितो लयश्चाऽत्र द्विरुद्ग्राहस्तु गीयते ।
ध्रुवाभोगौ सकृद्गायेन्न्यासोऽस्य ध्रुवके भवेत् ॥३२६॥

कङ्काले प्रतिताले च कुडुक्के प्रतिमण्ठके ।
रचिता चेत्तदा ज्ञेया वर्त्तन्येव विवर्त्तनी ॥३२७॥

अयं प्रबन्धो निर्युक्तस्तालादिनियमात्पुनः ।
त्रिधातुकोऽपि मेलापनामधातुविहीनतः ॥३२८॥
भावनीजातिमांस्तालपदस्वरसुबन्धतः ।

इति वर्त्तनी ।

**झोम्बड :**

यस्मिन्नुद्ग्राहपूर्वार्द्धं गीयते द्विः सकृत्ततः ॥३२९॥

उत्तरार्द्धं प्रयोगाढ्यो भवेन्मेलापको न वा ।
द्विर्गीत्वा ध्रुवमाभोगं सकृन्न्यासो ध्रुवे भवेत् ॥३३०॥

यत्राऽसौ झोम्बडो नाम ताले निःसारुके तथा ।
कुडुक्के त्रिपुटे चापि प्रतिमण्ठे द्वितीयके ॥३३१॥

यतिलग्ने गारुगौ च रासे च प्रतितालके ।
एकताल्याम्भवेदस्य सामान्यं लक्षणं स्मृतम् ॥३३२॥

झोम्बडे बहवो भेदाः नोक्ता ग्रन्थस्य विस्तरात् ।
चतुर्धातुस्त्रिधातुश्च मेलापाभावतो यदि ॥३३३॥
निर्युक्तस्तालनियमाद् द्व्यङ्गस्तारावलेयकः ।

इति झोम्बड ।

**लम्भ :**

यत्रैकखण्ड उद्ग्राहो द्विखण्डो वा भवेत्पुनः ॥३३४॥

गीयतेऽसौ सकृद्द्विर्वा ध्रुवप्रतिनिधौ ततः ।
द्विराभोगो ध्रुवे मुक्तिः स लम्भस्तु त्रिधातुकः ॥३३५॥

तारावलीजातिमांश्च द्व्यङ्ग्यत्वात्पदतालतः ।
तालादीनामनियमादनिर्युक्तो भवेदसौ ॥३३६॥

इति लम्भः ।

**रासक :**

यो झोम्बडगतं लक्ष्म गमकस्थानकैर्विना ।
रासको रासतालेन गीयतेऽसौ त्रिधातुकः ॥३३७॥

निर्युक्तस्तालनियमाद् द्व्यङ्ग्या त्तारावलेयकः ।

इति रासक : ।

**एकताली**

द्विरुद्ग्राहो ध्रुवोऽपि द्विः सकृदाभोगकस्ततः ॥३३८॥

न्यासः स्याद्ध्रुवके यत्र सैकताल्येकतालिका ।
अस्यामालापमात्रेण केचिदुग्राह ऊचिरे ॥३३९॥

आलापो गमकालप्तिरक्षरैर्वर्जिता मता ।
सैव प्रयोगशब्देन मुनिना सम्प्रकीर्तितः ॥३४०॥

तारावलीजातिमांश्च निर्युक्तोऽयन्त्रिधातुकः ।

इत्येकताली ।

इति शुद्धसूड ।

अथ आलिप्रबन्धनिरूपणम्

**वर्ण :**

उद्ग्राहध्रुवकौ यत्र बद्धौ कर्णाटभाषया ॥३४१॥

विरुदैर्वर्णतालेन पदैराभोगकल्पितः ।
स वर्णः स्याच्च निर्युक्तस्त्र्यङ्गः किन्तु त्रिधातुकः ॥३४२॥

अनुक्ताभोग[1] वस्तूनाम्पदैराभोगकल्पना ।
ओव्यादयस्तु[2] चत्वारो भवन्त्याभोगवर्जिताः ।।३४३।।

इति वर्णं ।

**वर्णस्वर :**

स्वरैः पाटैः पदैस्तेनै रचना वाञ्छितक्रमात् ।
मुक्तिस्तु तेनकैर्वर्णस्वरः स्याद्वर्णतालतः ।।३४४।।

स्वरादेरादिविन्यासाद्वेदाक्षि (द्व्देदाब्धि-) रचनात्मकः ।
अत्र स्वरादिमध्ये तु का (द्वा) भ्यामुद्ग्राहको भवेत् ।।३४५।।

एकेन (द्वाभ्याञ्च)[3] ध्रुव आभोगः पदैः कार्यस्त्रिधातुकः ।
निर्युक्त आनन्दिनीवान् बिरुदस्य विहीनतः ।।३४६।।

इति वर्णस्वर ।

**गद्यप्रबन्ध :**

गद्यम्पदचयञ्छन्दोवद्धहीनन्निगद्यते ।
तत्षोढोत्कलिका चूर्णं ललितं वृत्तगन्धि च ।।३४७।।

खण्डञ्च चित्रमेतेषां प्रभवः सामवेदतः ।
गातव्योत्कलिका वीरे गौडीमारभटीश्रिता ।।३४८।।

चूर्णं शान्ते च वैदर्भी सात्त्वतीं वृत्तिमाश्रितम् ।
पाञ्चालीकैशिकीभ्याञ्च[4] शृङ्गारे ललितं युतम् ।।३४९।।

शान्ते सपद्यम्भारत्याम्पाञ्चाल्यां वृत्तगन्धि च ।
वैदर्भीसात्वतीभ्याञ्च खण्डं हास्ये रसे स्मृतम् ।।३५०।।

---

1. Q भाव
2. L उद्यादयस्तु
3. कल्लिनाथकृतटीकायां 'द्वाभ्यां ध्रुवः कर्तव्यः इति पाठः
4. कैशिकीवृत्तिः, पञ्चाली रीतिः ।

वैदर्भीकैशिकीचित्रं ? (श्याञ्च) चित्रं शृङ्गारनिर्भरम् ।
चतु[1] ? रसेषु नानासुरी तिवृत्तिविचित्रता[2] ।।३५१।।

वेणीमिश्रमिति प्राहुरन्ये भेदद्वयम्परम् ।
वेणी सर्वैः कृता मिश्रञ्चूर्णकैर्वृत्तगन्धिभिः ।।३५२।।

द्रुता विलम्बिता मध्या बह्वल्पसमलैः क्रमात् ।
पृथग्लगत्वे मिश्रैश्च द्रुतमध्या गतिः परा ।।३५३।।

गतिर्द्रुतविलम्बाख्या त्वन्या मध्यविलम्बिता ।
इति गद्यस्य षट्प्रोक्ताः प्रत्येकङ्गतयोः बुधैः ।।३५४।।

सर्वैश्च गमकैर्वर्णैः प्रणवाद्यमतालकम् ।
स्वरैरतालवाक्यानां युतमन्तेऽन्तरान्तरा ।।३५५।।

अवान्तरानेकपदसैकतालपदद्वयम् ।
एकत्र वस्तुनामाङ्कं द्विर्द्विगीत्वा पृथक् ध्रुवे ।।३५६।।

प्रयोगो द्विविभागाढ्यो गीयते द्विर्विलम्बितम् ।
गातृनामान्यतालेन विलम्बेनाऽन्यतालतः ।।३५७।।

द्रुतान्नामप्रभोर्यत्राऽऽभोगे चैतत्समस्तकम् ।
पुनर्गीत्वा गातृपदे न्यासो गद्यन्निगद्यते ।।३५८।।

अनिर्युक्तस्त्रिधातुश्च भावनीजातिमानयम् ।

इति गद्यम् ।

**कैवाड :**

पाटैर्निरर्थैः सार्थैर्वा स्यातामुद्ग्राहकध्रुवौ ।।३५९।।

पदाभोगश्च कैवाडे न्यासमुद्ग्राहके भवेत् ।
भावनीजातिमांश्चायमनिर्युक्तस्त्रिधातुकः ।।३६०।।

इति कैवाड :

---

1. Q चरु
2. L रीनिवृत्ति विचित्रता ?

अङ्कचारिणी :

वीररौद्राढ्य-[1] बिरुदैर्बद्धावुद्ग्राहकध्रुवौ ।
पदैस्त्रिवर्णनामाङ्कै राभोगोऽपीष्टतालतः ॥३६१॥

गीयते यत्र सा प्रोक्ता गीतज्ञैरङ्कचारिणी ।
अनिर्युक्तस्त्रिधातुश्च भावनीजातिकोऽप्ययम् ॥३६२॥

इत्यङ्कचारिणी ।

कन्द :

आर्यागीतौ वीररसे देशभाषात्मकैः पदैः ।
उद्ग्राहः पाटबिरुदैर्ध्रुवश्चान्यपदान्तरैः ॥३६३॥

आभोगः पाटके न्यासः कन्दः स्यात्तालवर्जितः ।
निर्युक्तोऽयन्त्रिधातुश्च भावनीजातिमान्भवेत् ॥३६४॥

इति कन्द ।

हयलीला

तुरगलीलतालेन पदैरुद्ग्राहकध्रुवौ ।
आभोगोऽन्यपदैर्यत्र हयलीला द्विधा च सा ॥३६५॥

गद्यजा पद्यजा चेति गद्यबन्धात्तु गद्यजा ।
आर्याया वाऽश्वललितच्छन्दसः पूर्वपश्चिमौ ॥३६६॥

भागावतालतालौ वा व्यत्ययौ वा सतालकौ ।
यद्वा स्वरैः पदैस्तालाद्विरुदोग्राहबन्धत ॥३६७॥

पद्यजा इति विख्याता निर्युक्तश्च त्रिधातुकः ।
तारावलीजतिकोऽसौ दीपिनीजातिमान् क्वचित् ॥३६८॥

इति हयलीला ।

---

1. वै.

### गजलीला

गजलीलेन तालेन गजलीला निगद्यते ।
लक्ष्माश्च (क्ष्मता) ललितञ्छन्दोहीनोऽन्यद्धयलीलवत् ॥३६९॥

इति गजलीला ।

### द्विपदी

तालेन करुणानाम्ना द्विपदी परिगीयते ।
छः पञ्चभा[1] गुरुश्चान्ते चतुर्भिरीदृशैः पदैः ॥३७०॥

कृत्वा पूर्वार्द्धमुद्ग्राहम्परार्द्धन्ध्रुवकन्तथा ।
गातृनेतृप्रबन्धाङ्क आभोगोऽपि पदैः स्मृतः ॥३७१॥

यद्वा षष्ठद्वितीयौ जौ छजभजग गुरुमात्रतः ।
अपरे च स्वरान्प्राहुरुद्ग्राहस्यावसानतः ॥३७२॥

यद्वा पादैश्चतुर्भिस्तैरेकैकगुरुसंयुतै ।
किं वा छात्तगणाभ्याञ्च पाभ्यान्ताललयुतोऽथवा ॥३७३॥

छगणेन चतुर्मात्रैस्त्रिभिर्वा छगणाग्रतः ।
चतुर्भिर्यगणैर्युक्ता द्विपदीत्यवदन्परे ॥३७४॥
तारावलीको निर्युक्तस्त्रिधातुर्भावनी क्वचित् ।

इति द्विपदी ।

### चक्रवालः

प्राक्प्रागक्षरव्यूहो योन्त्यो वर्णचयः स चेत् ॥३७५॥

उत्तरोत्तरवाक्यादौ चक्रवालस्तदोच्यते ।
गद्यपद्यप्रभेदेन द्विविधः कथितो बुधैः ॥३७६॥

---

1. M.S. पंचता Q लपचता

उद्ग्राहध्रुवकौ तत्र चाऽभोगान्यपदैस्ततः ।
तारावलीजातिमांश्चाऽनिर्युक्तोऽसौ त्रिधातुकः ॥३७७॥

इति चक्रवालः ।

**क्रौञ्चपदः**

यत्र पदैः स्वरैः[1] स्यातामुद्ग्राहध्रुवकौ क्रमात् ।
आभोगोऽन्यपदैर्न्यास उद्ग्राहे प्रतितालतः ॥३७८॥

छन्दोहीनात् क्रौञ्चपदः स्वनामच्छन्दसाऽथवा ।
त्रिधातुस्तालनियमान्निर्युक्तो भाविनेयकः ॥३७९॥

इति क्रौञ्चपदः ।

**स्वरार्थप्रबन्धः**

यत्र सप्ताक्षरैरेव षड्जादिस्वरवाचकैः ।
क्रमव्युत्क्रमव्यस्तैश्च समस्तैर्वाञ्छितार्थकैः ॥३८०॥

उद्ग्राहध्रुवकौ स्यातामाभोगोऽन्यपदैः कृतः ।
स्वरार्थः स्यादिष्टतालान्मोक्ष उद्ग्राहके च सः ॥३८१॥

शुद्धमिश्रप्रभेदेन द्विविधः परिकीर्तितः ।
शुद्धः स्वराक्षरैरेव मिश्रस्त्वन्याक्षरैः स्वरैः ॥३८२॥
तारावलीजातिकोऽयमनिर्युक्तस्त्रिधातुकः ।

इति स्वरार्थः ।

**ध्वनिकुट्टनी**

मण्ठकङ्कालरहितौ तालौ भिन्नलयात्मकौ ॥३८३॥

---

1. Q. स्वरैः पदैः

सममात्रा यतिच्छेदौ[1] सपदोद्ग्राहकध्रुवौ ।
यत्राऽऽभोगः पृथक्तालपदैः स्याद्ध्वनिकुट्टनी ॥३८४॥
तारावलीजातिकोऽसौ निर्युक्तोऽपि त्रिधातुकः ।

इति ध्वनिकुट्टनी ।

### आर्या

यत्रार्याछन्दसः पूर्वदलोद्ग्राहः स्वरान्तकः ॥३८५॥

द्विःस्याच्चरमभागस्तु सकृद् ध्रुवस्ततः परम् ।
आभोगो न्यास उद्ग्राहे साऽऽर्या तालपदाश्रिता ॥३८६॥
त्रिधातुर्भावनीजातिर्निर्युक्तोऽसौ प्रबन्धकः ।

इत्यार्या ।

### गाथा

आर्यैव प्राकृते गाथा षट्पञ्चत्रिपदी च वा[2] ॥३८७॥
निर्युक्तो भावनीजातिस्त्रिधातुश्च भवत्ययम् ।

इति गाथा ।

### द्विपथः

छन्दसा दोधकेन द्विपथ उद्ग्राहमुक्तिकः ॥३८८॥

तालहीनः सतालो वा स च ज्ञेयश्चतुर्विधः ।
स्वरैरेकोऽन्यः प्रयोगैः सोभयानुभयौ परौ ॥३८९॥

उद्ग्राहध्रुवयोर्बद्धः पदैराभोगभूषितः ।
त्रिधातुकश्च निर्युक्तो भावनीजातिमान् क्वचित् ॥३९०॥
तारावलेयको भूरिं भेदाः सन्त्यन्य[3] गानतः[4] ।

इति द्विपथः ।

---

1. समसङ्ख्यासु मात्रासु (यतिः) पदविरतिः कर्तव्या इत्यर्थः । (कल्लि०)
2. Q त्रिपदियंदा
3. L सन्त्यस्य
4. Q भेदतः

कलहंसः

हंसकच्छन्दसा यत्र झम्पातन्मिततालतः ॥३९१॥

पदैः स्वरैर्निबद्धस्तु कलहंसो द्विधा पुनः ।
गद्यजः पद्यजश्चेति स्वरोद्ग्राहस्तु गद्यजः ॥३९२॥

पद्यजस्तु पदोद्ग्राहो ध्रुवस्तच्छेषतो भवेत् ।
आभोगोऽन्यपदैस्त्र्यङ्गो निर्युक्तोऽपि त्रिधातुकः ॥३९३॥

इति कलहंसः ।

तोटकः

तोटकच्छन्दसा बद्धः प्रतिपादम्पदैः स्वरैः ।
तोटकः पूर्वमुद्ग्राहो ध्रुवश्चरमभागतः ॥३९४॥
आभोगोऽन्यपदैस्त्र्यङ्गो निर्युक्तोऽसौ त्रिधातुकः ।

इति तोटकः ।

घट्टः

द्विपद्यांद्य-(द ?) र्धयन्मात्रामिततेनाद्यधातुकः ॥३९५॥

पदोत्तरार्द्धे ध्रुवको घटे मुक्तिस्तु तेनकैः ।
अर्द्धान्ते च स्वरैरन्यैः पदैराभोगमण्डितः ॥३९६॥
द्व्यङ्गस्त्रिधातुर्निर्युक्तो दीपनीजातिमान्[1] क्वचित् ।

वृत्तम्

वृत्तेन छन्दसा[2] तत्तु ग्लितिवृत्तं दशद्वयम् ॥३९७॥

पदैरिष्टेन तालेन बद्धं वृत्तं तदिष्यते ।
पादान्ते वापि वृत्तान्ते स्वराङ्गस्तद्विनाऽपरे ॥३९८॥

---

1. द्वाभ्यामङ्गाभ्यां बद्धस्तु तारावलीजातिमान् । किन्तु विकल्पेन यदा चतुर्भिरङ्गैर्बद्ध-स्तदा दीपनीजातिमान् ।

2. अत्र समार्धसमविषमवृत्तप्रकरणेषु विचित्योपादेया । (कल्लि)

उद्ग्राहध्रुवकौ तत्र पूर्वापरविभागतः ।
आभोगः पदतः कार्यो निर्युक्तश्च त्रिधातुकः ॥३९९॥
क्वचित्तारावलीलग्नो दीपनीजातिमान् क्वचित् ।

इति वृत्तप्रबन्धः ।

## मातृका

एकैकमातृका[1]- मन्त्रवर्णपूर्वपदानि चेत्[1]- ॥४००॥

क्रमतः परिगीयन्ते मातृका सा त्रिधा मता ।
दिव्या च मानुषी दिव्यमानुषी चेति तत्र तु ॥४०१॥

दिव्या संस्कृतया वाचा मार्गतालैश्च गीयते ।
मानुषी प्राकृतगिरा देशीतालैश्च निर्मिता ॥४०२॥

उभयोर्मिश्रणादुक्ता मातृका दिव्यमानुषी ।
गद्यजा पद्यजा चेति मातृका द्विविधा पुनः ॥४०३॥

अत्रोद्ग्राहस्त्वकारादिपदषोडशतो ध्रुवः ।
ककारादिचतुस्त्रिंशत्[2] पदैराभोगकस्ततः ॥४०४॥

दिव्यादिभेदैर्नियतवर्णपूर्वपदैः क्रमात् ।
तारावलीजातिमांश्च निर्युक्तोऽसौ त्रिधातुकः ॥४०५॥

इति मातृकाप्रबन्धः ।

## रागकदम्बः

अनेकरागैस्तालैश्च वृत्तिरङ्गैश्च धातुभिः ।
गद्यैः पद्यै रसैर्युक्तो[3] भवेद्रागकदम्बकः ॥४०६॥

---

1.1. 'वर्णपूर्वकाणि पदानि चेत् (सं र. 4/248)
2. 'पञ्चत्रिंशत्' कल्लि, टी., सं.र 4/248-252
3. L. रनिर्युक्तो

चतुर्वृत्तैश्चतुस्तालैः कविराजेप्सिताङ्गकैः ।
रागैश्चतुर्भिः प्राधान्यै[1]-र्नन्द्यावर्तो निगद्यते ॥४०७॥

तालेनैकेन गद्येन केचिदेनञ्जगुर्बुधाः ।
एतस्माद्रागतालाद्यैर्द्विगुणः स्वस्तिको भवेत् ॥४०८॥

अब्जपत्रोऽब्जगर्भश्च भ्रमराम्रेडितौ(ते)[2] तथा ।
स्वस्तिकात्पूर्वपूर्वस्माद् द्विगुणः स्यात्परात्परः[3] ॥४०९॥

तत्र पूर्वापरौ भागौ तदुद्ग्राहध्रुवौ क्रमात् ।
खण्डे खण्डेन्तिमे भागे[4] पदैराभोगकल्पितः ॥४१०॥
द्विधातुकोप्ययनिर्युक्तो मेदिन्यादिकजातिमान् ।

इति रागकदम्बः ।

**पञ्चतालेश्वरः**

वितालः पूर्वमालापः कर्तव्योऽर्थेन संयुतः ॥४११॥

चच्चत्पुटेन द्विर्गेयं प्रत्येकम्पदपञ्चकम् ।
स्वरपाटेप्सितं तञ्च धातुमातृपृथक्कृतम् ॥४१२॥

द्विचच्चत्पुटमानेन पाटैः पटहसम्भवैः ।
[5]अन्तरश्च ततश्चाचपुटेन पदपञ्चकम्[5] ॥४१३॥

पूर्ववत्त्वन्तरस्ताल[6]-मानाद्धौडुक्कपाटतः ।
ततस्तु षट्पितापुत्रकेणैव पदपञ्चकम् ॥४१४॥

---

1. Y सामान्यैः
2. सं.र. 4/255
3. Q परः परः
4. P. रागे
5-5. Q अन्तरश्च तथोद्भूतस्तालेन पदषट्ककम्
6. P यन्तरस्तालः

प्राग्वच्चान्तरः शङ्खपाटैस्तालद्विमानतः ।
सम्यक्वेष्टाकतालेन दलषट्कन्तु पूर्ववत् ।।४१५।।

तालद्विमानतः कांस्यतालसम्भवपाटकैः ।
अन्तरश्च तथोद्घट्टतालेन पदषट्ककम् ।।४१६।।

पाटैर्मुरुजसम्भूतैस्तालद्विमानतोन्तरः ।
गातृनेतृप्रबन्धाङ्क आभोगश्चाविलम्बितः ।।४१७।।

उद्घट्टमानात्तेनोऽपि न्यास आलापके भवेत् ।
पञ्चाङ्गकश्च निर्युक्तश्चतुर्धातुस्त्रिधातुकः ४१८।।

पञ्चतालेश्वरो यस्मात् तालबन्धविशेषतः ।
वीरावतारः शृङ्गारतिलकश्चेति स द्विधा ।।४१९।।

वीरशृंगारयोस्तेन प्रीयन्ते सर्वदेवताः ।

इति पञ्चतालेश्वरप्रबन्धः ।

## तालार्णवः

यथेप्सितसाङ्गैर्मार्गाणां तालैर्यद्वाञ्छितक्रमैः ।।४२०।।

आवृत्तिबहुभिर्बद्धस्तालार्णव इतीरितः ।
गद्यजः पद्यजश्चेति स द्विधा परिकीर्तितः ।।४२१।।

तत्र पूर्वार्धमुद्ग्राहश्चरमार्धं ध्रुवस्तथा ।
ध्रुवमध्यपदाभोग अन्यद् रागकदम्बवत् ।।४२२।।

इति तालार्णवः ।

इत्यालिप्रबन्धनिरूपणम् ।

## विप्रकीर्णप्रबन्धाः

### श्रीरङ्गः

तालै रागैश्चतुर्भिश्च दलैरन्ते पदान्वितः ।
श्रीरङ्गो मेदिनीमांश्च शेषः स्याद्रागपुञ्जवत् ।।४२३।।

न्यासोऽनुक्तस्तु सर्वत्र भवेदुद्ग्राहके ध्रुवम् ।

इति श्रीरङ्गः ।

श्रीविलास :

पञ्चभिश्च दलैस्तालै रागैरन्तस्वरात्मकः ।।४२४।।
श्रीविलासोऽपि पृथ्वीवान् शेषः श्रीरङ्गवद्भवेत् ।

इति श्रीविलासः ।

पञ्चभङ्गिः

रागाभ्यामपि तालाभ्यां दलाभ्यान्तेनकान्तकः ।।४२५।।
पञ्चभङ्गिप्रबन्धः स्याच्छेषः श्रीरङ्गवत् स्मृतः ।

पञ्चानन :

पञ्चाननोऽपि पाटान्तो रागाद्यैः पञ्चभङ्गिवत् ।।४२६।।

उमातिलक :

त्रिभिस्तालैर्दलै रागैरन्ते विरुदरञ्जितः ।
स्यादुमातिलकः श्रीदः शेषः श्रीरङ्गवन्मतः ।।४२७।।

इति पञ्चभङ्गिपञ्चाननोमातिलकप्रबन्धाः ।

त्रिपदी

अङ्घ्रयोर्यत्र चत्वारो बद्धाः कर्णाटभाषया ।
क्रमाद् द्विनेत्रवेदाग्निसङ्ख्यामात्राः गणात्मिकाः ।।४२८।।

षष्ठोऽत्र दशमोऽपि स्याद्रतेरन्ये तु मान्मथाः ।
अतालः पूर्वपादाभ्यामुद्ग्राहः परतो ध्रुवः ।।४२९।।

किन्तु स्वरप्रयोगोऽत्र सतालः स्यात् पदैः पुनः ।
आभोगस्त्रिपदी सा स्यान्नियुक्तश्च त्रिधातुकः ।।४३०।।
तारावलीजातिकोऽसौ पदतालप्रयोगतः ।

इति त्रिपदी ।

चतुष्पदी

कर्णाटभाषया बद्धा वेदपादा अतालकाः ।।४३१।।

नृपमात्राः समे पादे विषमे दशपञ्च च ।
[1]भिन्नार्थयमकौ यत्र क्रमात् पूर्वपरार्द्धयोः[1] ॥४३२॥

स्वरतेनावसानौ तावुद्ग्राहध्रुवकौ ततः ।
पदैराभोगको न्यासस्तेनकैः सा चतुष्पदी ॥४३३॥

त्रिधातुकश्च निर्युक्तो जातिः स्यादत्र दीपिनी[2] ।

इति चतुष्पदी ।

### षट्पदी

यस्याः षडङ्घ्रयस्तालरिक्ताः[3] कर्णाटभाषया ॥४३४॥

द्विर्द्विः कामगणाः प्रोक्ताः प्रतिपादन्तथा पुनः ।
षष्ठ-तृतीययोः प्रान्ते विशेषो बाणसंज्ञकः ॥४३५॥

उद्ग्राहस्त्रिपदैः पूर्वैः परैरन्तस्त्रयैर्ध्रुवः ।
आभोगोऽपि पदैर्न्यासो जीवनादे तु षट्पदी ॥४३६॥

तारावलीजातिकोऽसौ निर्युक्तश्च त्रिधातुकः ।

इति षट्पदी ।

### वस्तुप्रबन्धः

यस्य पञ्चाङ्घ्रयस्तत्र स्युः पञ्चदशमात्रिकाः ॥४३७॥

चन्द्राग्नीष्वङ्घ्रयस्तुर्यद्वितीयौ रविमात्रिकौ ।
स्वरपाटौ द्वितीयान्ते[4] शरान्ते स्वरतेनकौ[5] ॥४३८॥

---

1-1. L यमकालङ्कृता यः स्यात् क्रमात्पूर्वपरार्धकौ । Q यमकालङ्कृती यस्याः क्रमात्पूर्वापराद्धकौ ।

2. सं.र. कल्लि० टीका० 4/71—त्रिभिरङ्गैरुपनिबद्धा 'भावनी' न तु 'दीपिनी'

3. L तालबद्धाः सं.र. तालवर्जिता 4/271-2

4. 'आद्यं पादद्वयमादिममर्धम्, तत्स्वरपाटान्तं कर्तव्यमिति' सं.र. क. टी. 4/275

5. अवशिष्टं पादत्रयमपरमर्धं, तत्स्वरतेनकान्तं' (तत्रैव)

एभिरुद्ग्राहकः पश्चाद् दोधकेन ध्रुवस्ततः ।
आभोगोऽन्यपदैर्न्यासस्तेनके वस्तुतालयुक् ॥४३९॥
आनन्दिनीजातिकोऽसौ निर्युक्तश्च त्रिधातुकः ।

इति वस्तुप्रबन्धः ।

**विजय :**

यत्रस्याद्विजयस्ताल उद्ग्राहस्तेनकैः स्वरैः ॥४४०॥
पाटैः पदैर्ध्रुवः पश्चादाभोगोऽन्यपदैः कृतः ।
विजयो नाम पञ्चाङ्गो निर्युक्तश्च त्रिधातुकः ॥४४१॥

इति विजयः ।

**त्रिपथ :**

त्रिपथः पाटबिरुदैरुद्ग्राहः स्याद्ध्रुवः स्वरैः ।
पदैराभोगः पञ्चाङ्गोऽनिर्युक्तश्च त्रिधातुकः ॥४४२॥

इति त्रिपथः ।

**चतुर्मुख :**

स्वरैः पाटैः पदैस्तेनैः क्रमात्स्थाय्यादिवर्णगैः ।
उद्ग्राहः पूर्वभागाभ्यां पराभ्यां ध्रुवकस्ततः ॥४४३॥
आभोगोऽन्यपदैः शेषस्त्रिपथवच्चतुर्मुखे ।

इति चतुर्मुखः ।

**सिंहलील :**

यत्रोद्ग्राहः स्वरैः पाटैः ध्रुवो विरुदतेनकैः ॥४४४॥
पदाभोगः सिंहलीलस्तालः स्यात् सिंहलीलके ।
त्रिधातुकोऽपि निर्युक्तो मेदिनीजातिमानयम् ॥४४५॥

इति सिंहलीलः ।

### हंसलील:

यत्र तालो हंसलीलः पदैरुद्ग्राहकस्तथा ।
पाटै ध्रुवश्चान्यपदैराभोगो हंसलीलके ॥४४६॥
त्रिधातुकोऽपि निर्युक्तो भावनीजातिमानसौ[1] ।

इति हंसलीलः ।

### दण्डक :

दण्डकच्छन्दसः पूर्वद्विदलं पदनिर्मितः ॥४४७॥

उद्ग्राहश्चरमार्द्धन्तु ध्रुवश्च स्वरनिर्मितम् ।
आभोगोऽन्यपदैर्यत्र निबद्धश्च त्रिधातुकः ॥४४८॥
निर्युक्तो भावनीजातिमानसौ दण्डको भवेत् ।

इति दण्डकः ।

### झम्पट :

झम्पटस्त्रिपदीगाथाभेदः पूर्वदलद्वयम् ॥४४९॥

यत्रोद्ग्राहस्तृतीयन्तु ध्रुव आभोगकः पदैः ।
क्रीडातालस्त्रिधातुर्निर्युक्तस्तारावलीयकः ॥४५०॥

इति झम्पटः ।

### कन्दुक :

क्रमात्पदैश्च पाटैश्च विरुदैः कन्दुकः स्मृतः ।
उद्ग्राहः पदपाटाभ्या ध्रुवो विरुदबन्धतः ॥४५१॥
आभोगोऽन्यपदैः दीपिन्यनिर्युक्तस्त्रिधातुकः ।

इति कन्दुकः ।

### त्रिभङ्गि :

स्वरैः पाटैः पदैरुक्तस्त्रिभङ्गिः स च पञ्चधा ॥४५२॥

---

1. Q मेदिनी•

एकस्त्रिभङ्गिवृत्तेनान्यस्तन्नामतालतः ।
रागैस्तालैस्त्रिभिर्यद्वा भिन्नवृत्तत्रिभिर्युतः ॥४५३॥

ब्रह्मविष्णुशिवस्तुत्या तालद्वैगुण्यमुक्तकः ।
स्वरपाटकृतोद्ग्राहो ध्रुवः पदविराजितः ॥४५४॥

आभोगोऽन्यपदासक्तश्चतुरङ्गस्त्रिधातुकः ।
अनिर्युक्तश्च निर्युक्तो यथासम्भवयोजितः ॥४५५॥

इति त्रिभङ्गिः ।

**हरविलास :**

यत्रैकखण्ड उद्ग्राहो बद्धः स विरुदैः पदैः ।
पाटैर्बद्धस्ततस्तेनैर्बद्धः स ध्रुवसंज्ञकः ॥४५६॥

रचितान्यपदाऽभोगः सः स्याद्धरविलासकः ।
1-अनिर्युक्तस्त्रिधातुश्चानन्दिनीजातिमानयम्-1 ॥४५७॥

इति हरविलासः ।

**सुदर्शन :**

पदैरुद्ग्राहको यत्र विरुदैस्तेनकैध्रुवः ।
ततः पदान्तराभोगः स सुदर्शननामकः ॥४५८॥

त्रिधातुकश्चानिर्युक्तो दीपिनीजातिकस्त्वयम् ।

इति सुदर्शनः ।

**स्वराङ्क :**

स्वरैः पदैश्च विरुदैरुद्ग्राहादित्रयङ्क्रमात्[2] ॥४५९॥

एकद्वित्राश्च तालाः स्युः स्वराङ्के न्यसनं स्वरैः ।
आभोगोऽन्यपदैः किञ्च गातव्यो मालवश्रिया[3] ॥४६०॥

निर्युक्तकश्चतुर्धातुर्दीपिनीजातिमानयम् ।

इति स्वराङ्कः ।

---

1-1. L, अंशोऽयं नोपलभ्यते ।

2. सं.र. पदैरुद्ग्राहः, स्वरैः मेलापकः, बिरुदैध्रुवः (4/285)

3. सं.र. ४/286 किन्तु रत्नाकरोक्ता मालवश्रीः नर्तननिर्णयोक्ता मालवश्रीरागतः नितान्तभिन्नाऽस्ति ।

**श्रीवर्धन :**

यत्रोद्ग्राहस्तु विरुदै पाटैर्ध्रुवः पदैः स्वरैः ।।४६१।।

तालमानद्वयन्यास आभोगोऽन्यपदात्मकः ।
श्रीवर्धनोऽप्यनिर्युक्तस्त्रिधातुश्चानन्दिनेयकः ।।४६२।।

इति श्रीवर्धनः ।

**हर्षवर्धन :**

पदैश्च विरुदैर्हर्षवर्धनः स्वरपाटकैः ।
उद्ग्राहे स्यात्तु निर्वाणः शेषः श्रीवर्धनोदितः ।।४६३।।

इति हर्षवर्धनः ।

**वदनम्**

उद्ग्राहे छपदास्तादृक्[1] स्वरपाटयुतो ध्रुवः ।
आभोगोऽन्यपदैर्यत्र वदनङ्गदितम्बुधैः ।।४६४।।

तथोपवदनं प्रोक्तं छगणाच्चदतैर्युतम् ।
तथैव वस्तुवदनञ्छयुगाद्दचतैः कृतम् ।।४६५।।
अनिर्युक्तस्त्रिधातुश्च चतुरङ्गो भवेत्यसौ ।

इति वदनप्रबन्धः ।

**चच्चरी**

यत्र हिन्दोलको[2] रागश्छन्दतालश्च चच्चरी ।।४६६।।

बहवोप्यङ्घ्रयः किन्तु द्वौ द्वौ च प्राससंयुतौ ।
सा वसन्तोत्सवे गेया चच्चरी प्राकृतैः पदैः ।।४६७।।

अत्र पूर्वार्द्धमुद्ग्राह उत्तरार्द्धं ध्रुवस्ततः ।
आभोगोऽन्यपदैः कार्यः प्रबन्धोऽयं त्रिधातुकः ।।४६८।।

तारावलीजातिमांश्च निर्युक्तः कामदैवतः ।

इति चच्चरी ।

---

1. Q छपदास्तेष्टि
2. सं.र 4/290, किन्तु रत्नाकरोक्तहिन्दोलरागः नर्तननिर्णयोक्तहिन्दोलरागत नितान्त-भिन्नः

## चर्या

आर्यागणैश्चतुर्भिः स्यादङ्घ्रिर्जगणतो विना ।।४६९।।

अध्यात्मगोचरा चर्या पदान्तप्रासशोभिता ।
द्वितीयतालतो यद्वा तन्मात्रामिततालतः ।।४७०।।

अत्र पूर्वापरौ भागावुद्ग्राहध्रुवकौ ततः ।
आभोगोऽन्यपदैर्द्व्यङ्गो निर्युक्तोऽपि त्रिधातुकः ।।४७१।।

इति चर्या ।

## पद्धडी

नृपमात्रात्मकं छन्दः पदं यत्र विनाजकम् ।
युग्मपादान्तरप्रासा बहुभङ्गिविनिर्मिता ।।४७२।।

उद्ग्राहो विरुदैर्बद्धः स्वरान्तैः पूर्वभागतः ।
ध्रुवोऽपि बिरुदैर्बद्धः पाटान्तैरपरार्धकः ।।४७३।।

पादान्तरैः कृताभोगः पद्धडी सा मता सताम् ।
त्रिधातुकोऽसौ निर्युक्तो जातावानन्दिनेयकः ।।४७४।।

इति पद्धडीप्रबन्धः ।

## राहडी

अत्र वीररसेन स्यात्सङ्ग्रामरचितस्तुतिः ।
बहुभिश्चरणैर्बद्धा राहडी सानुकीर्तिता ।।४७५।।

अत्र पूर्वापरौ भागाबुद्ग्राहध्रुवकौ पुनः ।
द्व्यङ्गः पादान्तराभोगोऽनिर्युक्तो गुणधातुकः ।।४७६।।

इति राहडी ।

## वीरश्री :

यत्रोद्ग्राहः पदैर्बद्धो ध्रुवोऽपि बिरुदैस्ततः ।
आभोगोऽन्यपदैर्युक्तो वीरश्रीरिति गीयते ।।४७७।।
अनिर्युक्तस्त्रिधातुश्च भावनीजातिमानयम् ।

इति वीरश्रीः ।

मङ्गलाचार :

यस्तु गद्येन पद्येन गद्यपद्येन वा कृतः ।।४७८।।

निःसारुताले श्रीरागे त्वर्धान्ते स्वरवर्जितः ।[1]
मङ्गलाचारउद्ग्राहध्रुवौ द्विदलतः क्रमात् ।।४७९।।
पदाभोगस्त्रिधातुश्च निर्युक्तो भावनेयकः ।

इति मङ्गलाचारः ।

धवल :

त्रिविधो धवलःकीर्तिर्विजयो विक्रमस्तथा ।।४८०।।

चतुर्भिश्चरणैः षड्भिरष्टभिश्च क्रमादसौ ।
विषमस्थञ्छयुग्मं स्यात् तो वा दो वाधिकः समे ।।४८१।।

तदा स्यात् कीर्तिधवलो विजये त्वाद्यतुर्ययोः ।
दौ द्वौ षष्ठे द्वितीये च[2] शेषौ द्वौ छेन पेन वा ।।४८२।।

प्रथमे चास्त्रयोः दः स्यात् तृतीये दास्त्रयस्तु च ।
तुर्यद्वितीययोश्चैतत् पञ्चमे सप्तमे तथा ।।४८३।।

षष्ठेऽष्टमे दाश्चत्वारो यस्यासौ विक्रमो भवेत् ।
आशीर्भिर्धवलो गेयो विमलादिपदान्वितः ।।४८४।।

यदृच्छया वा धवलो गेयो लोकप्रसिद्धितः ।
अत्र सर्वत्र पूर्वार्द्धमुद्ग्राहः परतो ध्रुवः ।।४८५।।
आभोगोऽन्यपदैर्द्व्यङ्गोऽनिर्युक्तश्च त्रिधातुकः ।

इति धवलः ।

मङ्गल :

यत्रेषु च गणाः पादे पादे[3] विरलयेण[3] च ।।४८६।।

---

1. Q.L. राजितः, सं.र. स्वरान्वितः 4/298
2. L छौ
3-3. Z. पदेविलम्बितेन, सं.र. विलम्बितलये 4/304

शङ्खचक्रादिरचितैर्मङ्गलैरुत्तमैः पदैः।
श्रीरागे मङ्गलो गेयः किञ्च वा मालवश्रियाम् ॥४८७॥

अत्रापि पूर्वापरयोर्भागयोरुद्ग्राहध्रुवौ[1] ।
पदाभोगस्त्रिधातुश्च द्व्यङ्गो निर्युक्तकस्तथा ॥४८८॥

इति मङ्गलः ।

**ओवी**

खण्डत्रयं प्रासयुतं गीयते देशभाषया ।
ओवीपदं तदन्ते चेदोवी तज्ज्ञैस्तदोदिता ॥४८९॥

त्रयाणाञ्चरणानां स्युरेकाद्यावृत्तितो भिदाः ।
आदिमध्यान्तगैः प्रासै-[2] रेकाद्यैश्च पदे पदे ॥४९०॥

छन्दोभिर्बहुभिर्गेया ओव्यो जनमनोहराः ।

इत्योवी ।

**लोली**

सानुप्रासैस्त्रिभिः खण्डैर्मण्डिता प्राकृतैः पदैः ॥४९१॥
प्रान्ते लोलीपदोपेता लोली गेया विचक्षणैः ।

इति लोली ।

**ढोल्लरी**

दोहडः स्याद्यदा प्रान्ते प्रोल्लसद्ढोल्लरीपदः ॥४९२॥
ढोल्लरीनाम सा प्रोक्ता लाटभाषाविभूषिता ।

इति ढोल्लरी ।

**दन्ती**

अनुप्रासप्रधानञ्चेत् खण्डत्रयसमन्वितम् ॥४९३॥
दन्तीपदान्वितं प्रान्ते तदा दन्ती निगद्यते ।

इति दन्ती ।

---

1. L. उद्ग्राहकध्रुवौ
2. Q. प्रान्त्यैः

ओव्यादीनाञ्चतुर्णाञ्च पूर्वपूर्वद्विखण्डकम् ।।४९४।।

उद्ग्राहः परखण्डंत्तु ध्रुवः स्याच्च द्विधातवः ।
तारावलीजातिमन्त अनिर्युक्ताः प्रकीर्तिताः ।।४९५।।

अनुक्ताभोगवस्तूनां पदैराभोगकल्पना ।
ओव्यादयस्तु चत्त्वारो मेलापाभोगवर्जिताः ।।४९६।।

इति विप्रकीर्णप्रबन्धाः ।

सालगसूडप्रबन्धानां निरूपणम्

ध्रुवः

उद्ग्राहः क्रियते यस्य द्विखण्डोप्येकधातुकः ।
यद्वैकखण्डं द्विर्गायेत् किञ्चिदुच्चस्तृतीयकः ।।४९७।।

भिन्नधातुर्ध्रु वाख्यः स्यात् त्रयमेतद् द्विरभ्यसेत् ।
ततो द्विखण्ड आभोग आदिमखण्डकः पुनः ।।४९८।।

एकधातुः द्विखण्डश्च भिन्नधातूच्चको परः ।
स्तुत्यनामाङ्कितो न्यास उद्ग्राहश्चाद्यखण्डतः ।।४९९।।

स ध्रुवः स्याच्छोडशधा पदैरेकार्थवाचकैः ।
एकादशादिकैराद्यखण्डे[1] खण्डे क्रमात्तथा ।।५००।।

जयन्तशेखरोत्साहास्ततो मधुरनिर्मलौ ।
कुन्तलः कामलश्चारो नन्दनश्चन्द्रशेखरः ।।५०१।।

कामोदो विजयाख्यश्च कन्दर्पजयमङ्गलौ ।
तिलको ललितश्चेति तेषां संज्ञा इमाः क्रमात् ।।५०२।।

शृङ्गारे रासतालेन जयन्तः स्याच्च शेखरः ।
वीरे निःसारुताले स्यादुत्साहः प्रतिमण्ठतः ।।५०३।।

---

1. एकादशाक्षरखण्डादारभ्य षड्विंशत्यक्षरखण्डपर्यन्तमेकैकाक्षरवृद्ध्या वक्ष्माणाः जयन्तादयोः षोडशध्रुवाः भवन्ति । (सं.र. 4/318)

हास्ये च मधुरो गेयः करुणे हयलीलया ।
निर्मलः स्यात्तु शृङ्गारे क्रीडाताले च कुन्तलः ॥५०४॥

लघुशेखरतालेन गातव्यश्चाद्भुते रसे ।
विप्रलम्भे तु कामलो झम्पातालेन गीयते ॥५०५॥

चारो वीररसे गेयस्तथा निःसारुतालतः ।
वीरशृङ्गारयोरेकताल्या प्रोक्तस्तु नन्दनः ॥५०६॥

प्रतिमण्ठेन शृङ्गारे हास्ये स्याच्चन्द्रशेखरः ।
कामोदः प्रतिमण्ठेन शृङ्गारे विजयस्ततः ॥५०७॥

हास्ये द्वितीयतालेन कन्दर्पोप्यादितालतः ।
हास्ये शृङ्गारकरुणे जयमङ्गलसंज्ञकः ॥५०८॥

क्रीडातालेन शृङ्गारवीरयोः परिगीयते ।
एकताल्या रसे वीरे शृङ्गारे तिलकाभिदः ॥५०९॥

विचार ? (तालेन ?) प्रतिमण्ठेन शृङ्गारे ललितः स्मृतः ।
निर्युक्तकस्त्रिधातुश्च द्व्यङ्गस्तारावलेयकः ॥५१०॥

इति ध्रुवः ।

**मण्ठः**

द्वियत्येकविरामं वा खण्ड उद्ग्राहसंज्ञकः ।
ततो ध्रुवाख्यं द्विर्गायेत् विकल्पेनान्तरस्ततः ॥५११॥

तद्गीत्वा ध्रुवमागत्य चाभोगो गीयते सकृद् ।
न्यासस्तु ध्रुवके यस्य स मण्ठो मण्ठतालतः ॥५१२॥

षट्प्रकारो भवेदेष तालभेदेन मण्ठकः ।
जयप्रियो मङ्गलश्च सुन्दरो वल्लभस्तथा ॥५१३॥

कलापः कमलश्चेति तेषां तालरसन्तथा ।
वीरे जयप्रियो जेन शृङ्गारे भेन मङ्गलः ॥५१४॥

सुन्दरस्तेन (रः सेन)[1] शृङ्गारे करुणे रेन वल्लभः ।
विरामान्तेन तेन (नेन)[2] स्यात् कलापो हास्यके रसे ॥५१५॥

झम्पातालेन कमलोऽप्यद्भुतरसतो भवेत् ।
रङ्गोद्योतेन तालेन तथा चच्चत्पुटेन च ॥५१६॥
गीतं मण्ठाभिध-[3]म्प्राहुः केचिल्लक्ष्मविशारदाः ।

इति षड्विधो मण्ठः ।

**प्रतिमण्ठः**

प्रतिमण्ठादिवस्तूनां लक्षणं मण्ठवन्मतम् ॥५१७॥

उद्ग्राहादिगतं सर्वं भेदस्तालकृतो भवेत् ।
तत्र तु प्रतिमण्ठेन तालेन प्रतिमण्ठकः ॥५१८॥

स चतुर्धाऽमरस्तारो विचारः कुन्द इत्यपि ।
भ्रमरो गुरुणैकेन शृङ्गारे परिगीयते ॥५१९॥

झम्पातालेन वीरे च रौद्रे वा तारनामकः ।
विचारः करुणे गेयो नगणेन विरामतः ॥५२०॥
कुन्दो विराममध्येन लत्रयेणाद्भुते मतः ।

इति चतुर्धा प्रतिमण्ठः ।

**निस्सारुप्रबन्धः**

निःसारुतालतो बद्धो बुधैर्निःसारुको मतः ॥५२१॥

वैकुन्दानन्दकान्ताराः समरो वाञ्छितस्तथा ।
विशालश्चेति स प्रोक्तः षड्विधः पूर्वसूरिभिः ॥५२२॥

कुडुक्काभिधतालेन वैकुन्दो मङ्गले भवेत् ।
क्रीडातालेन चानन्दमानन्दे गीयते सदा ॥५२३॥

---

1. सं.र. 4/336
2. तत्रैव 4/337
3. Q मठ्ठाभिधं

विप्रलम्भाख्यशृङ्गारे कान्तारो रतितालतः ।
हंसलीलेन तालेन समरो वीरगोचरः ॥५२४॥

लत्रयाद्बिन्दुयुग्मेन वाञ्छितः सर्वसिद्धिदः ।
लेन द्रुताभ्यां लघुना सम्भोगे स्याद्विशालकः ॥५२५॥

इति षड्विधो निःसारुकः ।

**अड्डतालप्रबन्ध :**

अड्डतालेन तालेनाड्डतालः षड्विधो भवेत् ।
निःशङ्कशङ्कशीलाश्च चारोऽथ मकरन्दकः ॥५२६॥

विजयश्चेति निःशङ्को लगदैर्बिन्दुनाद्भुते ।
रसे वीरे च शृङ्गारे शङ्कःस्यात्प्रतितालतः ॥५२७॥

झम्पातालेन शान्ते च शीलः स्याच्चारनामकः ।
द्रुताभ्यां लगुरुभ्याञ्च रसे वीरेऽद्भुते तथा ॥५२८॥

मकरन्दोऽपि शृङ्गारे बिन्दुभ्यां गुरुणा भवेत् ।
द्वितीयतालेन रसे वीरे तु विजयः स्मृतः ॥५२९॥

**रासक :**

रासको रासतालेन स चाऽऽलापादिगानतः ।
चतुर्विधो भवेदेष न लक्ष्ये दृश्यते तथा ॥५३०॥

विनोदो वरदो नन्दः कम्बुजश्च विशेषतः ।
सर्वरासकभेदेषु द्विखण्डोद्ग्राहको भवेत् ॥५३१॥

ध्रुवोऽवसानकालापो विनोदः कौतुके भवेत् ।
आलापमध्यध्रुवको वरदो देवतास्तुतौ ॥५३२॥

आलापनिर्मितोद्ग्राहो नन्दस्त्वभ्युदये स्मृतः ।
आलापादिध्रुवो यत्र कम्बुजः करुणे भवेत् ॥५३३॥

इति चतुर्विधो रासकः ।

## एकतालीप्रबन्ध :

एकताल्या च तालेनैकताली त्रिविधा मता ।
रमा च चन्द्रिका तद्वद् विपुलेत्यथ लक्षणम् ॥५३४॥

यत्रोद्ग्राहः प्रयोगात्मपदैरालापको[1] ध्रुवः ।
पदान्तरकृताऽभोगः सा रमा चन्द्रिका तु सा ॥५३५॥

उद्ग्राहो द्विदलो यत्र गमकालापकोः ध्रुवः ।
[2]-पदान्तराऽभोगतः स्याद् यत्यनुप्राससंयुता ॥५३६॥

यत्राऽऽलापपदोद्ग्राहस्त्वपरालापतो ध्रुवः ।-[2]
आभोगोऽन्यपदैः सा तु विपुला परिकीर्तिता ॥५३७॥

इति त्रिविधैकताली ।

मण्ठादयः प्रबन्धास्तु द्व्यङ्गास्तारावलेयकाः ।
त्रिधातवश्च निर्युक्ताः सान्तराश्चाब्धिधातवः ॥५३८॥

सूडक्रमं वदन्त्यन्ये केचिल्लक्ष्मविशारदाः ।
ध्रुवो मठ्यो रूपकश्च झम्पातालस्ततः परम् ॥५३९॥
त्रिवडश्चाड्डु[3]-तालाख्यस्त्वेकतालीति च क्रमात् ।

इति सालगसूडः ।

## अन्यप्रसिद्धप्रबन्धाः :

प्रसिद्धाः केचिदन्येऽपि कथ्यन्ते लोकवृत्तितः[4] ॥५४०॥

चन्द्रप्रकाशः सूर्यादिप्रकाशो नवरत्नकः ।
वीरशृङ्गारको रुद्रप्रकाशो रणरङ्गकः ॥५४१॥

---

1. 'आलापो गमकालप्तिरक्षरैर्वर्जिता मता ।
सैव प्रयोगशब्देन शाङ्गंदेवेन कीर्तिता' ॥ सं.र. 4/360-1

2-2 पद्यांशोऽयं Q ग्रन्थे नोपलभ्यते ।

3 P. त्रिखण्ड चाड्डु

4. इमे प्रबन्धा अति प्राचीनाः सन्ति । सोमराजदेव—हरिपाल— कुम्भा— पण्डितमण्ड-
ल्यादिविद्वद्भिश्च स्व स्व-ग्रन्थेषु तथैवोक्ताः ।

दशावतारः शरभलीलाख्यश्चतुरङ्गकः ।
ऋतुप्रकाशः शृङ्गारहारश्चेत्यथ लक्षणम् ॥५४२॥

**चन्द्रप्रकाश :**

खण्डैः षोडशभिश्चन्द्रप्रकाशश्चन्द्रभूपयोः ?
प्रतिखण्डं कलैकैका वर्णनीया मनीषिभिः ॥५४३॥

स्वरैः पाटैस्तथा तेनैर्बिरुदैः पदसंयुतैः ।
रागैः षोडशभिस्तालैस्तावद्भिः परिगीयते ॥५४४॥
खण्डेन्तिमे भवेन्नाम स्वामिनश्च कवेरिह ।

इति चन्द्रप्रकाशः[1] ।

**सूर्यप्रकाश :**

खण्डैर्द्वादशभिः सूर्यप्रकाशस्तु निगद्यते ॥५४५॥

चन्द्रप्रकाशवच्छेषं चैत्रमासादिवर्णनात् ।
रागैस्तालैश्च तावद्भिः श्लेषः स्याद्रविभूपयोः ॥५४६॥

इति सूर्यप्रकाशः[2] ।

**नवरत्नक :**

अङ्क-ब्रह्म-रसा[3] खण्डैः ग्रह-रत्न-रसैस्तथा ।
राग-ताल-दलैश्चैवं नवभिर्नवभिः क्रमात् ॥५४७॥

सर्वाङ्गबद्धखण्डानि नव यत्र प्रगीयते ।
नवरत्नं तदाख्यातमन्यच्चन्द्रप्रकाशवत् ॥५४८॥

इति नवरत्नकः[4] ।

---

1. सङ्गीतराजे 'चन्द्रकला' इति नाम ।
(सं रा. 2/4/4'54-60) (प्रकीर्णकप्रबन्धः)
2. सङ्गीतराजे ग्रा[illegible]क्रमगतास्य प्रबन्धस्य
'स्तवसूर्यप्रकाशः' इति नाम । (सं.रा. [illegible]/4/3/119-122)
3. P धरा, Z। ब्रह्मरतो
4. सङ्गीतराजे 2/4/4/102

### वीरश्रृङ्गारः

सकृद्रागेण गातव्यो वीरश्रृङ्गारसंज्ञकः ।
सप्तभिः सप्तभिस्तालैर्गीतिश्चापि यदृच्छया ॥५४६॥

आद्यखण्डः पदैरेव गीयन्तेऽन्येऽपि खण्डकाः ।
पदैः प्रयोगैर्विविधैः पादालापवितालतः ॥५५०॥

आद्यखण्डः परार्द्धस्य धातुकश्चान्यमातुकः ।
तं गीत्वोद्ग्राहके न्यासः प्रतिखण्डं भवेदिति ॥५५१॥

श्रृङ्गारवर्णनञ्चात्र श्लेषः स्याद्वीरकामयोः ।
अन्तखण्डं पदैः कार्यो नेत्रादिनामभूषितः ॥५५२॥

इति वीरश्रृङ्गारः[1] ।

### रुद्रप्रकाश :

एकादशदलैः रागैः षडङ्गैस्तेनकान्तकः ।
पुराणोक्तप्रकारेण रुद्राणां वर्णनं क्रमात् ॥५५३॥
रुद्रप्रकाशनामा स्याच्छेषश्चन्द्रप्रकाशवत् ।

इति रुद्रप्रकाशः[2] ।

### रणरङ्गक :

सकृद्रागः सकृत् खण्डः पाटैः सविरुदैः पदैः ॥५५४॥
वीरे रौद्रे च रङ्गाख्यताले स्याद्रणरङ्गकः ।

इति रणरङ्गः[3] ।

---

1. सङ्गीतरत्नावल्यां सोमराजदेवेन (1177 AD वर्षे) वीरावतारः श्रृंगारतिलकश्च वर्णितः (भ. को. पृ. 946)
सङ्गीतशिरोमण्याम् पण्डितैरपि प्रबन्धोऽयं वर्णितः (पृ. 316) । सङ्गीतराजेऽपि प्रकीर्णकप्रबन्धोऽयं विस्तारेण वर्णितः 2/4/4/18-26
2. सं. राजे 2/4/4/102
3. संगीतराजे 2/4/4/27, सङ्गीतशिरो० पृ. 356 तथा हरिपालीये–(भ. को. पृ. 52) (1175 AD वर्षे) प्रबन्धोऽयं तद्वदेव वर्णितः ।

### दशावतार :

विष्णोर्दशावताराणां प्रत्येकं यत्र वर्ण्यते[1] ।।५५५।।

तद्गुणं[2] दशभिः खण्डैः षडङ्गैर्वाञ्छितक्रमैः ।
अन्त्यखण्डः पदाभोग[3] अवतारो दशादिमः ।।५५६।।

इति दशावतारः[4] ।

### शरभलील :

तालैः रागैर्दलैरष्टभिः स्याच्छरभलीलकः ।
सर्वाङ्गकः स्वरान्तश्च स्वनामछन्दसाऽथवा ।।५५७।।
मुक्तकेनाऽपि कथितः शेषम्पूर्ववदीरितम् ।

इति शरभलीलः[5] ।

### चतुरङ्ग :

चतुरङ्गश्चतुः खण्डः षडङ्गैः रागरञ्जितैः ।।५५८।।
तेनकान्तैः कृतश्चान्त्यपदैस्त्रैर्वर्णनं स्मृतम् ।

इति चतुरङ्गः[6] ।

### ऋतुप्रकाश :

पुष्पवाणप्रधानेन वसन्तादिकषड्ऋतून् ।।५५९।।

षड्रागैश्च दलैरङ्गैर्वीरश्रृङ्गारवर्णनम् ।
वर्ण्यते च क्रमाद्यत्र स स्यादृतुप्रकाशकः ।।५६०।।

इति ऋतुप्रकाशः ।

### श्रृङ्गारहार :

स्वरैरुदग्राहको यत्र पदैः श्रृङ्गारवर्णितः ।
प्रयोगान्ते ध्रुवः पश्चाद् गातृवस्त्वभिधानतः ।।५६१।।

---

1. Q. वर्णनं
2. Q सद्गुणं
3. P गोवता ?
4. सङ्गीतराजे 2/4/2/321-327
5. मानसोल्लासे (1181 AD) 16/4/333, हरिपालीये- भ.को. पृ. 656, सं० शिरोमणी पृ 335, सङ्गीतराजे 2/4/3/138-141
6. मानसो० 16/4/353, सं.रा. 2/4/4/66-71, सं.शि. पृ. 347-8

वितालकपदालापात्पाटैस्तालयुगोन्तरः ।
आभोगो नेतृनामाङ्को न्यास उदग्राहके भवेत् ।।५६२।।
शृङ्गारहारनामा स कथितो लक्ष्मवेदिभिः ।

इति शृङ्गारहारः ।

इति प्रवन्धाः ।

**गीतगुणाः**

व्यक्तम्पूर्णम्प्रसन्नञ्च सुकुमारमलङ्कृतम् ।।५६३।।
समं सुरक्तं श्लक्ष्णञ्च विकृष्टम्मधुरन्तथा ।
एते दशगुणा गीते विद्वद्भिः परिकीर्तिताः ।।५६४।।
तत्र व्यक्तं स्फुटतराक्षररागपदस्वरैः ।
पूर्णम्पूर्णाङ्किंगमकं प्रसन्नम्प्रकटार्थकम् ।।५६।।
सुकुमारकण्ठभवं त्रिस्थानोत्थमलङ्कृतम् ।
समवर्णलयस्थानं समं वीणादिशब्दतः ।।५६६।।
कण्ठध्वन्येकतायुक्तं सुरक्तमभिधीयते ।
नीचोच्चद्रुतमध्यादौ श्लक्ष्णत्वे श्लक्ष्णमुच्यते ।।५६७।।
उच्चैरुच्चारणादुक्तं विकृष्टं मधुरम्पुनः ।
लावण्यपूर्णं निर्दोषं सारवज्जनरञ्जनम् ।।५६८।।

इति गीतगुणाः ।

**गीतदोषाः**

दुष्टं लोकेन शास्त्रेण श्रुतिकालविरोधि च ।
पुनरुक्तं कलाबाह्यङ्गतक्रममपार्थकम् ।।५६९।।
ग्राम्यं सन्दिग्धमित्येवं दशधा गीतदुष्टता ।
पददोषाः वाक्यदोषाः दोषाश्च रसभावयोः ।।५७०।।
काव्यालङ्कारदोषाश्च ते सर्वे गीतमाश्रिताः ।

इति गीतदोषाः

**वाग्गेयकारः**

उच्यते वचनम्मातुर्गेयन्धातुमिति स्मृतम् ।।५७१।।
एतद् द्वयञ्च कुरुते स वै वाग्गेयकारकः ।
शब्दाभिधानालङ्कारछन्दोवृत्तिसुरीतिता ।।५७२।।
रसभावकलाताललयकाकुविवेकता ।
अशेषभाषाप्रतिभा देशीरागप्रवीणता ।।५७३।।

नानागीतिविनिर्माणं प्रबन्धाङ्कप्रगल्भता ।
त्रिस्थानगमकप्रौढिर्विविधालप्तिनैपुणम् ॥५७४॥

अनुच्छिष्टोक्तिता धातु[1]-नूतनत्वं सुविज्ञता ।
रागद्वेषपरित्यागः सुशरीरः सभाजयः ॥५७५॥

अवधानं गुणैरेभिर्वरो वाग्गेयकारकः ।
न्यूनमात्वधिकं धातुविदधानस्तु मध्यमः ॥५७६॥

रम्यधातुर्विनिर्माताप्यधमो मन्दधातुकृत् ।
वरो वस्तुकविर्वर्णकविर्मध्यम उच्यते ॥५७७॥
कुट्टिकारोऽन्यधातौ तु मातुकारः प्रकीर्तितः ।

इति वाग्गेयकारकः ।

विधिप्रबन्धाऽकलननादवेदाङ्गवेदिनाम् ॥५७८॥
विठ्ठलेन स्वरगतिः सुकर सुगतिः कृता ।

इति श्रीकर्णाटजातीय-पण्डरीकविठ्ठलविरचिते
नर्तननिर्णये[2] गायक[3] प्रकरणं तृतीयम् ॥

---

1. T निर्बन्धः
2. P. रागनिर्णये
3. M. गायन

# नर्तननिर्णयः

## चतुर्थं प्रकरणम्

देशभाषाकलाभाववरसविद् वृन्दनायकः ।
नर्त्तनँल्लक्ष्यलक्ष्यज्ञो यो नर्त्तयति नर्त्तकः ॥१॥

अङ्गविक्षेपवैशेष्यञ्जनचित्तानुरञ्जनम् ।
नटेन दर्शितं यत्र नर्त्तनङ्कथ्यते तदा ॥२॥

नाट्यन्नृत्त्यन्नृत्तमिति त्रिविधन्तत्प्रकीर्तितम् ।
नाटकादिकथादेशवृत्तिभावरसाश्रयम् ॥३॥

चतुर्धाऽभिनयोपेतन्नाट्यमुक्तम्मनीषिभिः ।
अपुस्तं सर्वाभिनयसम्पन्नम्भावभूषितम् ॥०॥

सर्वाङ्गसुन्दरन्नृत्त्यं सर्वलोकमनोहरम् ।
हस्तपादादिविक्षेपैश्चमत्काराङ्गशोभितम् ॥५॥

त्यक्ताऽभिनयमानन्दकरन्नृत्तञ्जनप्रियम् ।
नृत्ते भेदत्रयञ्चास्ति विषमं विकटँल्लघु ॥६॥

शस्त्रसङ्कटरज्वादिभ्रमणं विषमं हि तत् ।
विरूपतोऽङ्गवेषादिव्यापारं विकटम्मतम् ॥७॥

उपेतङ्करणैरल्पैरुत्प्लुताद्यैर्लघु स्मृतम् ।
ताण्डवँल्लास्यमित्येतन्नृत्तन्नृत्ये द्विधा द्विधा ॥८॥

प्रगल्भमुद्भटप्रायप्रयोगन्ताण्डवम्मतम् ।
नर्माङ्गसुन्दरङ्कामदीपनँल्लास्यमीरितम् ॥९॥

अभिपूर्वस्तु णीञ् धातुराभिमुख्यार्थनिर्णये ।
यस्मात् प्रयोगन्नयति तस्मादभिनयः स्मृतः ॥१०॥

चतुर्धाऽभिनयः स स्याद्वाचिकाहार्यसात्विकाः ।
आङ्गिकश्चेति तन्मध्ये वाचिकः श्रेष्ठ उच्यते ॥११॥

वाचिक :

अङ्गनेपथ्यसत्त्वानि वागर्थं व्यञ्जयन्ति हि ।
तस्माद्वाचः परन्नास्ति वाग्भिः (वाचः) सर्वस्य कारणम् ॥१२॥

[क] दाचिद्गद्यपद्यादिभाषा प्राकृतसंस्कृतैः ।
सार्थकं रचितो वाण्या (शब्दैः ?) वाचिकः सोऽभिधीयते ॥१३॥

आहार्याभिनय :

आहार्याभिनयो नाम ज्ञेयो नैपथ्यजो विधिः ।
चतुर्विधन्तु नैपथ्यं पुस्तोऽलङ्कारकस्तथा ॥१४॥

सञ्जीवश्चाङ्गरचना चेति पुस्तस्त्रिधा मतः ।
सन्धिमा भाजिमा चैव चेष्टिमा चेति नामतः ॥१५॥

इति पुस्तः ।

कीलितं वस्त्रचर्माद्यैर्यद्रूपङ्क्रियते नटैः ।
सन्धिमा भाजिमा ज्ञेयो यन्त्रेण क्रियते तु यः ॥१६॥

चेष्ट्यते चैव यद्रूपञ्चेष्टिमा स तु संज्ञितः ।
शैलयानविमानानि चर्मवर्मायुधध्वजाः ॥१७॥
यानि क्रियन्ते तान्येव स पुस्त इति संज्ञितः ।

अलङ्कार :

अलङ्कारश्च विज्ञेयो माल्याभरणवाससाम् ॥१८॥
नानाविधसमायोगो यथाङ्गेषु विनिर्मितः ।

सञ्जीव :

यः प्राणिनाम्प्रवेशस्तु स सञ्जीव इति स्मृतः ॥१९॥

अङ्गरचना

रक्तः पीतः सितो नीलो वर्णाश्चैते स्वभावतः ।
संयोगजास्तथा चाऽन्ये चोपवर्णास्तथा परे ॥२०॥

सितनीलसमायोगात् पाण्डुवर्णः प्रकीर्तितः ।
सितरक्तसमायोगात् पद्मवर्ण इति स्मृतः ।।२१।।

पीतनीलसमायोगात् कषायो नाम जायते ।
रक्तपीतसमायोगाद् गौर इत्यभिधीयते ।।२२।।

एते संयोगजा वर्णा ह्युपवर्णास्तथापरे ।
त्रिचतुर्वर्णसंयुक्ता बहवः परिकीर्तिताः ।।२३।।

बलवान्यो भवेद्वर्णस्तस्य भागो भवेत्तमः (तः) ।
दुर्बलस्य तु भागौ द्वौ नीलं मुक्त्वा प्रदापयेत् ।।२४।।

नीलस्यैको भवेद्भागश्चत्वारो यत्र (ऽन्ये तु) वर्णके ।
बलवान् सर्ववर्णानान्नील एव प्रकीर्तितः ।।२५।।
तैरङ्गरचना कार्या नानावेषप्रधानतः ।

### सात्विकभावा :

सुखदुःखकृतो भावो मनसः सत्त्वमीरितम् ।।२६।।

तत्प्रयुक्तश्च भावश्च सात्त्विकः सोऽपि चाऽष्टधा ।
स्तम्भः स्वेदश्च रोमाञ्चः स्वरभेदोऽथ वेपथुः ।।२७।।
वैवर्ण्यमश्रु प्रलय इत्यस्याऽभिनयो यथा ।

### स्तम्भ :

हर्षविस्मयरोमाञ्चविषादाच्च मदाद्भयात् ।।२८।।

स्तम्भ उत्पद्यते तस्य कर्म वक्ष्यामि साम्प्रतम् ।
निश्चेष्टो निःप्रकम्पश्च स्मितशून्यजडाकृतिः ।।२९।।

निःसंज्ञः स्तब्धगात्रश्च स्तम्भन्त्वभिनयेद्बुधः ।

### स्वेद :

क्रोधलज्जाभयाद् ईर्ष्याद् व्यायामाद् दुःखतः श्रमात् ।।३०।।

पीडातो रोगतस्तापात् घर्मात् स्वेदः प्रजायते ।
व्यजनग्रहणेनाऽपि स्वेदोपनयनेन च ।।३१।।
स्वेदस्याऽभिनयो योज्यस्तथा वाताभिलाषतः ।

रोमाञ्च :

रोमाञ्चो रोगतः शीतहर्षस्पर्शभयादितः ॥३२॥

मुहुः कण्टकितत्त्वेन गात्रसंस्पर्शनेन च ।
रोमाञ्चस्त्वभिनेयो वै तथा लूकसनेन (भ्रूकर्षणेन) च ॥३३॥

स्वरभेद :

मदक्रोधभयाद्धर्षाज्जरसः स्वरभेदतः ।
कार्यस्तस्याऽप्यभिनयो भिन्नगद्गदनिःस्वनैः ॥३४॥

वेपथु :

रोगशीतजरास्पर्शभयहर्षाच्च वेपथुः ।
वेपनात् स्फुरणं कम्पाद् वेपथुं सम्प्रयोजयेत् ॥३५॥

वैवर्ण्यम्

शीततापक्लमक्रोधाद् वैवर्ण्यम्भयरोगतः ।
मुखवर्णं परावृत्त्या नाडीपीडनयोगतः ॥३६॥
वैवर्ण्यमभिनेतव्यं प्रयत्नादङ्गसंश्रयम् ।

अश्रु

शोकामर्षभयानन्दजृम्भणाञ्जनधूमतः ॥३७॥

अनिमेषप्रेक्षणतो भवेदश्रूनि शीततः ।
नेत्रसम्मार्जनैर्बाष्पैरश्रुं चाभिनयेद्बुधः ॥३८॥

प्रलय :

प्रलयः श्रमतो निद्रामूर्च्छामोहाभिघाततः ।
निश्चेष्टो निःप्रकम्पश्च स्मितशून्यजडाकृतिः ॥३९॥

तथा सन् भूमिपतनात् प्रलयाभिनयो भवेत् ।

अभिनयस्य आङ्गिको भेद :

शिरो नेत्रकराद्यङ्गैर्दर्शितश्चाङ्गिको मतः ॥४०॥

एतेषामभिनयानामिति कर्तव्यता द्विधा ।
लोकधर्मी नाट्यधर्मी प्रत्येकमिति ते द्विधे ॥४१॥

चित्तवृत्यर्पिका काचिद्बाह्यवस्त्वनुकारिणी ।
वाचिकाऽभिनये लोकधर्मी केवलवाक्यतः ।।४२।।

तत्र साङ्केतिकं वाक्यं चित्तवृत्यर्पिका मता ।
प्रकटार्थात्मकं वाक्यं बाह्यवस्त्वनुकारिणी ।।४३।।

रागसंयुक्तवाक्यं [तु] नाट्यधर्मीति कथ्यते ।
दुर्गरागात्मकं वाक्यं चित्तवृत्त्यर्पिका स्मृता ।।४४।।

प्रख्यरागात्मकं वाक्यं बाह्यवस्त्वनुकारिणी ।
आहार्याऽभिनये हारकेयूरादिकभूषणे(णैः ?) ।।४५।।

लोकधर्मीति सा ज्ञेया चित्तवृत्त्यर्पिका तदा ।
भूषणेन विनाप्यङ्गैर्भूषणार्थप्रदर्शनम् ।।४६।।

दर्शनं भूषणैः साक्षाद् बाह्यवस्त्वनुकारिणी ।
पुस्तेन कृतवैचित्र्यं नाट्यधर्मीति कथ्यते ।।४७।।

पुस्तार्थं सूचयत्यङ्गैर्विना पुस्तेन दर्शिका ।
चित्तवृत्त्यर्पिका सैव तद्विदैः परिकीर्तिता ।।४८।।

साक्षात् पुस्तप्रयोगेण बाह्यवस्त्वनुकारिणी ।
सात्त्विकाऽभिनयो लोकधर्मी स्तम्भादिदर्शनात् ।।४९।।

चित्तवृत्त्यर्पिका तत्र स्व[1]-भावैर्भावदर्शनम् ।
साक्षात् भावप्रकाशश्च बाह्यवस्त्वनुकारिणी ।।५०।।

सहस्तैः,सात्विकैर्भावैर्नाट्यधर्मीति गीयते ।
स्तम्भादिदर्शनोद्भेदं चित्तवृत्त्यर्पिका तदा ।।५१।।

ससात्विकैर्हस्तकैश्च बाह्यवस्त्वनुकारिणी ।
आङ्गिकाऽभिनये लोकधर्मी हस्तकनेत्रतः ।।५२।।

अर्थप्रकाशनन्तत्र चित्तवृत्त्यर्पिका तदा ।
चित्तवृत्त्यर्पितं भावं यदा नेत्रैः प्रकाश्यते ।।५३।।

---

1. L. स्क,

चन्द्रपद्मगदादीनां हस्तकैरर्थदर्शनम् ।
यदा तदा मुनिः प्राहुर्बाह्यवस्त्वनुकारिणी ॥५४॥

नर्माङ्गसुन्दरकरकरणैरर्थदर्शनम् ।
नाट्यधर्मी तदा ज्ञेया चित्तवृत्त्यर्पिका तु सा ॥५५॥

एकाञ्च कैशिकीं वृत्तिं संश्रित्याऽङ्गविभागतः ।
सौकुमार्यविशेषेण यत्राऽर्थस्य प्रदर्शनम् ॥५६॥

आवेष्टितादिकरणैर्यत्र शोभा विशेषतः ।
अर्थप्रकाशनं सैव बाह्यवस्त्वनुकारिणी ॥ ५७॥

त्रयस्त्रिंशद् व्यभिचारिभावाः

वक्ष्ये भावरसादीनामभिनयम्प्रसङ्गतः ।
निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमाः ॥५८॥

आलस्यञ्चैव दैन्यञ्च चिन्ता मोहः स्मृतिर्धृतिः ।
व्रीडा चपलता हर्ष आवेगो जडता तथा ॥५९॥

गर्वो विषाद औत्सुक्यन्निद्राऽपस्मार एव च ।
स्वप्ने[1] विनोदोऽमर्षश्चाऽप्यवहित्थमथोग्रता ॥६०॥

मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ।
त्रासो वितर्क इत्येते रामाग्निव्यभिचारिणः ॥६१॥

निर्वेदः

क्रोधाक्रोशनदारिद्र्यतत्वज्ञानान्न(व)मानन.त् ।
ताडनेष्टवियोगाच्च परवृद्धिप्रदर्शनात् ॥६२॥

व्याधिदुःखादधिक्षेपान्निर्वेदो नाम जायते ।
ध्यानदीनवचोनेत्रसम्प्रसारणतस्तथा ॥६३॥

निःश्वासरुदितोच्छ्वासैस्तस्य त्वभिनयो भवेत् ।

---

1. Q स्वप्नं R सुप्ति H सुप्तं प्रबोधो

ग्लानि :

वान्तेर्विरेकतो निद्राछेदाच्च क्षुत्पिपासया ।।६४।।

अतिव्यायामतश्चाध्वगमनाच्चोपवासतः ।
जरसस्तपसो मद्यसेवनाऽतिशयात्तथा ।।६५।।

व्याधेर्मानान्मनस्तापाद् ग्लानिः समुपजायते ।
क्षामवाक्यैरनुत्साहैर्मन्दक्रमणकम्पनैः ।।६६।।

ववर्ण्यकृतगात्रैश्च ग्लानिन्त्वभिनयेद्बुधः ।

शङ्का

चौर्यराजापराधादिभयात् प्रियव्यलीकतः ।।६७।।

तथा पापस्य करणात् शङ्का सञ्जायते स्फुटम् ।
शुष्कोष्ठकण्ठवदनैर्मुहुः पार्श्वावलोकनैः ।।६८।।

गुरुविह्वलवैवर्ण्यभेदैराकारगोपनैः ।
जिह्वायाः लेहनैः किञ्चित् कम्पैः शङ्काम्प्रदर्शयेत् ।।६९।।

चौर्यादिरचिता शङ्का प्रायः कार्या भयानके ।
प्रियव्यालीकजनिता तथा शृङ्गारिणाम्मता ।।७०।।

असूया

दृष्ट्वा सौभाग्यमैश्वर्यम्मेधां विद्यासमुच्छ्रयम् ।
कृतापराधात् परतस्त्वसूयोत्पद्यते सदा ।।७१।।

सभासु दोषप्रख्यानैर्गुणघातोपवाक्यतः ।
भ्रुकुटीकुटिलोत्क(षँ)स्तस्याश्चाऽभिनयो भवेत् ।।७२।।

मद :

मद्योपयोगादुत्पन्नो मदः स त्रिविधो मतः ।

उत्तमो मध्यमो नीचस्तस्य त्वभिनयः क्रमात् ।।७३।।

स्मितवाङ्मधुरोत्कृष्टतनुशे (शे) ते च गायति ।
सुकुमाराविद्धमतिरुत्तमे प्रकृतिर्मदे ।।७४।।

गायति हसति स्रस्तु (स्तो) व्याकुलो बाहुक्षेपतः ।
स्खलितो घूर्णनयनः प्रकृतिर्मध्यमे मदे ॥७५॥

गत्याहतपरुषवाक् नष्टस्मृतिश्च रोदिति ।
गुरुसज्ववमानजिह्वो निष्ठीवत्यधमे मदे ॥७६॥

**श्रम :**

अध्वव्यायामसन्नृत्तसञ्चारैर्जायते श्रमः ।
मन्दोत्क्षेपणसीत्कारैर्जृम्भणैरङ्गमर्दनैः ॥७७॥

निःश्वासस्वेदगमनैरास्यनेत्रविकूणनैः ।
गात्रसंवाहनैस्तस्य बुधैरभिनयः स्मृतः ॥७८॥

**आलस्यम्**

स्वभावव्याधिखेदैश्च त्वालस्यं नाम जायते ।
शयनासनतस्तन्द्रानिद्रासेवनतस्तथा ॥७९॥
दौहृदादस्याभिनयः प्रद्वेषात् सर्वकर्मतः ।

**दैन्यम्**

दौर्गत्यान्मनसश्चिन्त्यौत्सुक्यात् समुत्थदुःखतः ॥८०॥

दैन्यञ्च जायते तस्य विविधोऽभिनयो भवेत् ।
अधस्थशिरसा रोगगात्रगमनस्तम्भनैः ॥८१॥
हाहेति दीनवचनैर्विज्ञप्त्या च प्रणामतः ।

**चिन्ता**

ऐश्वर्यश्रेष्ठकद्रव्याहाराच्चिन्तादरिद्रतः ॥८२॥

तनुकार्श्येन सन्तापैर्ध्यानाधोमुखचिन्तनैः ।
निःश्वासोच्छ्वसिताभ्याञ्च चिन्तामभिनयेद्बुधः ॥८३॥

**मोह :**

व्यसनाद्व्याधितः पूर्ववैरस्मरणतो भवेत् ।
कुस्थानतस्कराद्वापि मोहः समुपजायते ॥८४॥

निश्चेष्टिताङ्गभ्रमणाद् दर्शनाद् घूर्णपातनात् ।
सर्वेन्द्रियाणां सम्मोहात् तस्य त्वभिनयो भवेत् ॥८५॥

## स्मृति :

सुखदुःखातिक्रान्ताधीभाविता वृत्तितो यथा ।
चिरविस्मृतसच्छास्त्रात् स्मृतिर्नामोऽथ जायते ॥८६॥

शिरःकम्पनभ्रूक्षेपैः सहर्षैः खललोकनैः ।
तर्जन्यग्रोपचारेण स्मृतिन्त्वभिनयेत्सुधीः ॥८७॥

## धृति :

शौर्यशक्तिश्रुतिज्ञानान्नानाक्रीडार्थलाभतः ।
गुरुभक्त्याधिकाच्छौचाद्धृतिः समुपजायते ॥८८॥

शब्दरूपरसस्पर्शगन्धानामुपभोगतः ।
अप्राप्तातीतोपहतशोचादभिनयो भवेत् ॥८९॥

## व्रीडा

गुरुव्यतिक्रमाऽवज्ञाप्रत्यादिष्टानुतापतः ।
किञ्चिदकार्यकरणाद् व्रीडा समुपजायते ॥९०॥

निगूढवचनैर्भूमिलेखनैर्नखकृन्तनैः ।
वस्त्राङ्गुलीयकस्पर्शैरधोवदनचिन्तनैः ॥९१॥
इत्याद्यैरनुभावैश्च व्रीडामभिनयेद्बुधः ।

## चपलता

रागद्वेषमदामर्षमात्सर्येर्ष्याविशेषतः ॥९२॥

उत्पद्यते चपलता तस्याश्चाभिनयोऽपि च ।
वाक्पारुष्यैः सम्प्रहारताडनैर्वधबन्धनैः ॥९३॥
निर्भर्त्सनाज्ञापनैश्चेत्येवमाज्ञाविचारतः ।

## हर्ष :

ईप्सितावाप्तितो देवगुरुभर्तृप्रसादतः ॥९४॥

मनोरथस्य सँल्लाभादिष्टागमनतोषतः ।
धनभोगादिलाभाच्च हर्ष उत्पद्यते तदा ॥९५॥

स्वेदानन्दाश्रुरोमाञ्चैर्नयनास्यप्रसादतः ।
प्रियभाषाऽऽलिङ्गनतो ललितैः करताडनैः ॥९६॥
विचित्राङ्गविकारैश्च हर्षस्याऽभिनयः स्मृतः ।

**आवेग :**

उत्पातवातवर्षाग्निप्रियश्रवणतस्तथा ॥९७॥
कुञ्जरोद्भ्रमणाद्वातादप्रियश्रवणादपि ।
उत्पद्यतेऽष्टविधित आवेगः सम्भ्रमात्मकः ॥९८॥

**उत्पातज :**

विद्युदुल्कातिपतनाच्चन्द्रसूर्योपरागतः ।
विषादमुखवैवर्ण्यविस्मयस्त्रस्तगात्रतः ॥९९॥
केतुदर्शनजोत्पातकृतन्त्वभिनयेद्बुधः ।

**वातज :**

अवकुण्ठनतश्चाक्षिमर्दनाद्वस्त्रसङ्ग्रहात् ॥१००॥
शीघ्रगमनतो वातकृतन्त्वभिनयेत्सुधीः ।

**वर्षज :**

पिण्डीकरणतोऽङ्गस्य चाश्रयाच्छीघ्रधावनात् ॥१०१॥
वर्षीकृतन्त्वभिनयेद्धूमसङ्कोचनेत्रतः ।

**अग्निज :**

शीघ्रं विधूननादग्निकृतन्त्वभिनयेद्बुधः ॥१०२॥

**प्रियश्रवणज :**

वस्त्राभरणदानाच्चाभ्युत्थानालिङ्गनाश्रुभिः ।
पुलकैः प्रियश्रवणकृतन्त्वभिनयेद्बुधः ॥१०३॥

**कुञ्जरपरिभ्रमणज :**

द्रुतापसर्पणस्तम्भभयवेपथुविस्मयात् ।
अवलोकनतः पश्चान्मनश्चञ्चलतस्तथा ।।१०४।।
कुञ्जरोद्भ्रमणकृतं विज्ञस्त्वभिनयेद्वरम् ।

**शत्रुव्यसनज :**

सहसाऽपक्रमणतो वर्मशस्त्रादिधारणात् ।।१०५।।
गजाश्वस्यन्दनारोहात् प्रहारात् सम्प्रधारणात् ।
घातकृतन्त्वभिनयेच्छस्त्रविक्षेपत्रासतः ।।१०६।।

**अप्रियश्रवणज :**

भूमिपाताद्विलापाच्चाक्रन्दितात् परिदेवनात् ।
परिधावनतो वक्त्रविषमपरिवर्तनात् ।।१०७।।
अप्रियश्रवणकृतं सुधीस्त्वभिनयेत्सदा ।

**जडता**

अनिष्टश्राव्यदृश्यादिकार्यस्याऽप्रतिपत्तिता ।।१०८।।
व्याधेरज्ञानवशतो जडता नाम जायते ।
तूष्णीभावात् परवशादनिमेषनिरीक्षणात् ।।१०९।।
अप्रतिभाकथनतो जडताऽभिनयो भवेत् ।

**गर्व :**

रूपयौवनविद्यातो धनलाभात् कुलाद्बलात् ।।११०।।
ऐश्वर्याज्जायते गर्वो विक्षेपैर्गुरुविक्रमैः ।
अङ्गावलोकनैर्वाकपारुष्यैरतिवर्षणैः ।।१११।।
अवज्ञानुत्तराद्यैश्चाऽऽभाषणैरभिनयः स्मृतः ।

**विषाद :**

कृतचौर्यादिग्रहणाद् दैवादिष्टादवाप्तितः ।।११२।।
राजदोषादितः कार्यात् स्वरभङ्गाद्विषादतः ।
निद्रानिश्वसितोत्साहविघातादुर्मनस्यतः ।।११३।।

दैवाव्यापत्तिकचिन्ताविचिन्त्योपायध्यानतः ।
सहायान्वेषणोपायाद् विषादाभिनयो भवेत् ॥११४॥

### औत्सुक्यम्

वियोगादिष्टजनत औत्सुक्यन्नाम जायते ।
दीर्घनिःश्वसितान्निद्रातन्द्राशय्याभिलाषतः ॥११५॥
औत्सुक्यमभिनेतव्यमधोवदनचिन्तनैः ।

### निद्रा

आलस्यमन्ददौर्बल्यश्रमक्लमस्वभावतः ॥११६॥

रात्रौ जागरचिन्तात्याहारान्निद्रा प्रजायते ।
मुखगौरवतो गात्रलोलनैरङ्गमोटनैः ॥११७॥

उच्छ्वासतश्च निःश्वासान्नेत्रघूर्णनजृम्भणैः ।
स्रस्तगात्राक्षिमुकुलैरेवन्निद्राम्प्रदर्शयेत् ॥११८॥

### अपस्मारः

देवदानवयक्षादिग्रहणानुस्मरणात्तथा ।
कालान्तरनिपाताच्च ब्रह्मराक्षसलग्नतः ॥११९॥

भूतप्रेतपिशाचाच्च शून्यागारप्रवेशनात् ।
अशुच्युच्छिष्टतो रात्रावपस्मारः प्रजायते ॥१२०॥

निष्ठीवकम्पितैः स्तम्भस्वेदस्फुरितधावनैः ।
निःसंज्ञापतनैरास्यफेनैर्जिह्वातिलेहनैः ॥१२१॥
इत्याद्यैरनुभावैश्चापस्माराऽभिनयः स्मृतः ।

### सुप्तिः

निद्रासमुत्थितः स्वप्नस्तस्य चाऽभिनयस्त्विति ॥१२२॥

श्वासोच्छ्वासैश्च निश्चेष्टमन्दाक्षिविनिमीलनैः ।
बाह्येन्द्रियाणां सम्मोहात् सुप्त्या स्वप्नम्प्रदर्शयेत् ॥१२३॥

विबोध :

निद्राच्छेदाच्च दुःस्वप्नादाहारपरिणामतः ।
शब्दाच्च स्पर्शतः सम्यग् विबोधो नाम जायते ॥१२४॥

भुजविक्षेपणादङ्गचलनादक्षिमर्दनात् ।
अङ्गुलित्रोटनाच्चैव शयनस्य विमोक्षणात् ॥१२५॥
जृम्भणादभिनेतव्यः सुबोधः सुजनैरिति ।

अमर्ष :

आक्षिप्तानां सभामध्ये विद्यैश्वर्यबलाधिकैः ॥१२६॥

नृणामुत्साहसम्पन्नो ह्यमर्षो नाम जायते ।
उत्साहाद् व्यवसायानामधोमुखविचिन्तनैः ॥१२७॥
शिरः प्रकम्पस्वेदाद्यैस्तम्प्रयुञ्जीत नृत्यवित् ।

अवहित्थम्

लज्जाधार्ष्ट्यभयाज्जैह्म्यादवहित्थम्प्रजायते ॥१२८॥

अन्यथाकथनैरङ्गमोटनैश्च विलोकनैः ।
कृद्धैर्यादिभिर्विद्वानभिनयेदवहित्थकम् ॥१२९॥

उग्रता

असत्प्रलापतश्चौर्यग्रहणाच्च नियोगतः ।
नृपापराधतश्चाऽपि चोग्रता ज्ञायते स्फुटम् ॥१३०॥
बन्धताडननिर्भर्त्सैः सुधीरभिनयेत्तु ताम् ।

मति :

नानाशास्त्रार्थनिष्पत्या मतिः सञ्जायते नृणाम् ॥१३१॥
शिष्योपदेशार्थकृतस्तस्य त्वभिनयो भवेत् ।

व्याधि :

वातपित्तकफश्लेष्म (द्वन्द्व) सन्निपातोद्भवज्वरात् ॥३२॥

उद्भवो व्याधिरित्युक्तः सशीतोष्ण इति ज्वरः ।
प्रक्षेपोऽन्यभिलाषेण सर्वाङ्गोत्कम्पकुञ्चितैः ॥१३३॥

चलद्धनुविकूणास्यरोमाञ्चमुखशोषणैः ।
गात्रस्रस्ताङ्गविक्षेपैरनेकपरिदेवनैः ॥१३४॥

शीतज्वरन्त्वभिनयेत् सदाहज्वरकम्पुनः ।
निक्षिप्तवस्त्राङ्घ्रिकरैः क्ष्माभिलाषानुलेपनैः ॥१३५॥

शान्ताभिलषतो गात्रस्तम्भस्रस्ताक्षिनिस्वनैः ।
निकूणनास्यस्तनितैरभिनयेत् परिश्रमैः ॥१३६॥

**उन्माद :**

वातपित्तादिकोपाच्च विभवस्य प्रणाशतः ।
व्यसनस्याऽभिघाताच्च स्वेष्टजनवियोगतः ॥१३७॥

विविधार्जितविकाराडुन्मादो नाम जायते ।
हसितैरुदितोत्क्रोशैरनिमित्तप्रधावनैः ॥१३८॥

असम्बद्धप्रलापैश्च पठनैर्गीतनृत्यतः ।
उद्धूलनाद्भस्मपांशोस्तृणनिर्माल्यकण्ठतः (लङ्कृतः) ? ॥१३९॥

शरावाभरणैरन्यैरनवस्थितचेष्टितैः ।
शय्योत्थितोपविष्टैश्च ह्युन्मादाभिनयः स्मृतः ॥१४०॥

**मरणम्**

मरणन्द्विविधम्प्रोक्तं व्याधिजं चाभिघातजम् ।
यकृच्छूलादिदोषोत्थवैषम्यपिटकज्वरैः ॥१४१॥

विषूचिकादिभिर्यातं मरणं व्याधिजं मतम् ।
अव्यक्तवचनैर्हिक्काकासश्वासाक्षिमीलनैः ॥१४२॥

विषण्णगात्रनिश्चेष्टेन्द्रियैस्तच्च प्रदर्शयेत् ।
व्याधीनामेकभावो हि मरणाभिनयः स्मृतः ॥१४३॥

विषपानाऽहिदंशाच्च शस्त्रघाताच्च श्वापदात् ।
गजस्यन्दनयानाच्च पतनादभिघातजम् ॥१४४॥

अहिदष्टे विषे पीते विषवेगैरतिक्रमात् ।
कार्श्यञ्च वेपथुन्दाहं हिक्काम्फेनन्ततः परम् ॥१४५॥

स्कन्धभङ्गश्चजडताम्मरणञ्च प्रदर्शयेत् ।
शस्त्रपाते तु सहसा पतनं स्फुरणादिभिः ।।१४६।।

श्वापदस्यंदनगजाश्वयानपतनोद्भवम् ।
शस्त्रप्रहारवत्कार्यमङ्गानामप्रचालनम् ।।१४७।।
इत्येवं मरणं ज्ञेयं नानावस्थान्तरात्मकम् ।
प्रयोक्तव्यम्बुधैः सम्यग् यथावागङ्गचेष्टितैः ।।१४८।।

**त्रास :**

महाभैरवनादाद्यैस्त्रासः समुपजायते ।
स्रस्ताङ्गार्धनिमेषाद्यैस्तस्य त्वभिनयो भवेत् ।।१४९।।

**वितर्क :**

विचारणादिसम्भूतसन्देहजननात्मकः ।
वितर्कस्त्वभिनेयस्तु शिरोभ्रूपक्ष्मकम्पनैः ।।१५०।।

इति व्यभिचारिभावाः ।

**स्थायिभावा :**

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयन्तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावा रसाश्रयाः ।।१५१।।

**रति :**

इष्टार्थविषयप्रायः प्राप्त्या सञ्जायते रतिः ।
सौम्यत्वादभिनेया सा वाङ्माधुर्याङ्गचेष्टितैः ।।१५२।।

**हास :**

परचेष्टानुकरणाद्धासः समुपजायते ।
स्मितहासादिहसितैरभिनेयः स पण्डितैः ।।१५३।।

**शोक :**

वियोगादिष्टजनतो नाशाद्विभवनाशतः ।
बधबन्धनदुःखाद्यैः शोकः समुपजायते ।।१५४।।

स्वरभेदस्रस्तगात्रैर्वैवर्ण्यपरिदेवितैः ।
अश्रुपातक्रन्दिताद्यैः शोकस्याऽभिनयः स्मृतः ।।१५५।।

क्रोध :

विवादकलहाक्रुष्टाघर्षैः क्रोधः प्रजायते ।
उत्फुल्लनासापुटतः सन्दष्टोष्ठपुटद्वयात् ॥१५६॥
उद्वृत्तनयनैर्गण्डस्फुरणैरभिनयः स्मृतः ।

उत्साह :

असम्मोहादिभिर्व्यक्तो व्यवसायनयात्मकः ॥१५७॥
उत्साहस्त्वभिनयोऽसावप्रमादक्रियादिभिः ।

भयम्

गुरुराजापराधेन रौद्राणाञ्चापिदर्शनात् ॥१५८॥
श्रवणादपि घोराणाम्भयम्मोहेन जायते ।
गात्रकम्पनवित्रासैर्वक्त्रशोषणसम्भ्रमैः ॥१५६॥
विस्फारितेक्षणैः कार्यस्त्वभिनेयः क्रियागुणैः ।

जुगुप्सा

जुगुप्सोत्पद्यतेऽहृद्यदर्शनश्रवणैस्तथा ॥१६०॥
स्पर्शनैः क्रीडनैरन्यैरहृद्यैश्च विभावतः ।
नासाप्रच्छादनेनेह गात्रसङ्कोचनेन च ॥१६१॥
उद्वेजनैश्च हृल्लेखैः जुगुप्सामभिनिर्दिशेत् ।

विस्मय :

कर्मातिशयनिवृतो विस्मयो हर्षसम्भवः ॥१६२॥
सिद्धिस्थाने त्वसौ साध्यो हर्षाश्रुपुलकादिभिः ।

इति स्थायिभावाः ।

रसा :

शृङ्गारहास्यकरुणारौद्रवीरभयानकाः ॥१६३॥
वीभत्साद्भुतनामा चेत्यष्टौ नाट्ये रसाः स्मृताः ।

शृङ्गार :

ऋत्वलङ्कारगान्धर्वकाव्यप्रियजनाश्रयात् ॥१६४॥

उद्यानादिविहारैश्च श्रृङ्गार उपजायते ।
प्रसादवदनैर्नेत्रस्मितैर्धृतिप्रमोदतः ॥१६५॥

मधुरैरङ्गविहारैः सम्भोगोऽभिनयः स्मृतः ।
दशावस्थागतं कामं विप्रलम्भे प्रदर्शयेत् ॥१६६॥

अभिलाषस्ततश्चिन्ता स्मृतिश्च गुणकीर्तनम् ।
उद्वेगोऽथ विलापः स्यादुन्मादो व्याधिरेव च ॥१६७॥
जडता मरणं चेति दशावस्थाः प्रकीर्तिताः ।

(i) अभिलाष :

व्यवसायात् समारब्धः सङ्कल्पेच्छासमुद्भवः ॥१६८॥

समागमोपायकृतः सोऽभिलाषः प्रकीर्तितः ।
करोति मदनाकारम्मुहुर्विशति गच्छति ॥१६९॥
तिष्ठत्यालोकनपथे मन्मथे प्रथमे स्थिते ।

(ii) चिन्ता

केनोपायेन सम्प्राप्तिः कथं बा सम्भवेन्मम ॥१७०॥
दूतीनिवेदितैर्वाक्यैरिति चिन्तां विनिर्दिशेत् ।

(iii) स्मृति :

आकेकराक्षिविप्रेक्षी काञ्चीवलयदर्शनात् ॥१७१॥

नीवीस्पर्शपरामर्शे द्वितीये कार्यमीरितम् ।
मुहुर्मुहुर्निश्वसितैर्मनोरथविचिन्तनैः ॥१७२॥
प्रद्वेषश्चान्यकार्याणामनुस्मृतिरुदाहृता ।

(iv) गुणकीर्तनम्

शय्यासनैः धृतिञ्चैव लभते च स्वकर्मणि ॥१७३॥

अविधतोऽपहताद्धस्तात् तृतीयेऽभिनयो मतः ।
अङ्गप्रत्यङ्गलीलाभिर्वाक्चेष्टाहसितेक्षितैः ॥१७४॥
नास्त्यन्यः सदृशस्तेनेत्येतस्माद् गुणकीर्तनम् ।

गुणकीर्तनेन शनैरश्रुस्वेदापमार्जनैः ॥१७५॥
दूत्यविरहविस्रम्भैश्चतुर्थे कार्यं ईदृशः ।

(v) उद्वेग :

आसने शयने वाऽपि न तुष्यति न हृष्यति ॥१७६॥

नित्यमेवौत्सुकञ्च स्यादुद्वेगस्थानमेव तत् ।
चिन्तानिःश्वासस्वेदेन हृद्गदाऽभिनयेन च ॥१७७॥
कुर्यात्तदेवमत्यन्तम्पञ्चमे च प्रदर्शयेत् ।

(vi) विलाप :

इह स्थितमिहासीनमिह चोपगतम्मया ॥१७८॥

इति तैस्तैर्विलपितैर्विलापस्त्वभिदर्शितः ।
उद्विग्नात्यर्थमौत्सुक्या रत्या चाऽपि विलापिनी ॥१७९॥
नतः स्तुतश्च भ्रमति षष्ठस्थानसमाश्रिता ।

(vii) उन्माद :

तत्संश्रितां कथां युङ्क्ते सर्वावस्थागतोऽपि हिं ॥१८०॥

पुंसाम्प्रद्वेषितश्चैव स्यादुन्मादोऽतिमोहतः ।
अनिमेषदृष्टिस्तिष्ठन् दीर्घोच्छ्वासञ्च मुञ्चति ॥१८१॥
रोदिति विहारकाले सप्तमे भाव ईदृशः ।

(viii) व्याधि :

सामदानार्थ(समदनार्थ)सम्भोगैः काम्यैः सम्प्रोक्षणैरपि ॥१८२॥
सर्वैर्निरन्तरकृतैर्व्याधिः समुपजायते ।

दहत्यङ्गं न लभते धृतिं मुह्यति मानसम् ॥१८३॥
शिरसो वेदना च स्यादष्टमे गतिरीदृशी ।

(ix) जडता

पृष्टा न किञ्चित् प्रब्रूते न शृणोति न पश्यति ॥१८०॥

तूष्णीं हा कष्टभाषा च नष्टचित्तहृतस्मृतिः ।
अकाण्डे दत्तहुंकारस्तथा प्रशिथिलाङ्गिका ॥१८५॥
श्वासग्रस्तानना चैव जडताभिनयो भवेत् ।

(x) मरणम्

प्रतिकारैः कृतैः सर्वैर्यदि नाऽस्ति समागमः ॥१८६॥

कामाग्निना प्रदीप्ता या भवेत्तु मरणान्ततः ।
एवं स्थानानि कार्याणि कामतन्त्रसमीक्षया ॥१८७॥

अप्राप्तौ सति कामस्य वर्जयित्वा तु नैधनम् ।
विविधैः पुरुषोऽप्येवं[1] विप्रलम्भानुसूचकैः ॥१८८॥
भावैरेतानि कामस्य नानारूपाणि योजयेत् ।

भावप्रगल्भा :

एवं कामयमानानां स्त्रीणान्नृणामथाऽपि वा ॥१८९॥
सामान्यगुणयोगेन युञ्जीताभिनयं बुधाः ।

इति शृङ्गारः ।

विकृतैर्वेषभूषाद्यैः कुहकैर्व्यङ्गदर्शनैः ॥१९०॥

दोषोदाहरणैर्हास्यो जायते धार्ष्ट्यतस्तथा ।
नासास्पन्दनतो दृष्टिव्याकोशात् कुञ्चनैस्तथा ॥१९१॥

स्वेदास्यरागतो दन्तदर्शनैरोष्ठवादनैः ।
तस्य चाऽभिनयः प्रोक्तः पार्श्वस्य ग्रहणादिभिः ॥१९२॥

इति हास्यः ।

क्लेशैर्विभवनाशैश्च वधबन्धनविद्रवैः (सूद्रवैः) ।
शापैरिष्टवियोगाद्यैर्जायते करुणारसः ॥१९३॥

परिदेवनवैवर्ण्य[2] निःश्वासैः स्रस्त[3]गात्रतः ।
स्वरभेदाश्रुपातैश्च मुखशोषणतस्तथा ॥१९४॥
स्मृतिलोपादिभिर्भावभेदैरभिनयः स्मृतः ।

इति करुणारसः ।

---

1. कष्येय
2. Q वैषम्य
3. ऽस्मैः खलु

क्रोधाधिक्षेपतो घर्षै[1]-र्वाक्पारुष्यावमाननैः ॥१९५॥

अनृतैर्वचनैश्चान्यै रौद्र समुपजायते ।
ताडनैः छेद्यभेद्याद्यैः शस्त्रसम्पातसङ्ग्रहैः ॥१९६॥

दन्तौष्ठपीडनै रक्तनेत्रभ्रुकुटिग्रन्थिलैः ।
स्फुरद्धस्ताग्रनिष्पेषैस्तस्य चाऽभिनयः स्मृतः ॥१९७॥

इति रौद्रः ।

शक्तिप्रतापश्च बलैर्विनयैश्च पराक्रमैः ।
नयादिभिर्विभावैश्च वीरो नामाऽभिजायते ॥१९८॥

धैर्यैश्वर्यैस्तथा त्यागैः शौर्याद्याक्षेपवाक्यतः ।

तस्य चाभिनयः कार्यः प्रसादवदनादिभिः ॥१९९॥

इति वीरः ।

विकाररवजः (तः) क्रूरविकृतैः सत्त्वदर्शनैः ।
सङ्ग्रामारण्यतः शून्यनिकेतनप्रवेशतः ॥२००॥

नृपगुर्वपराधाच्च जायते च भयानकः ।

इति भयानकः ।

कराङ्घ्रिक्षेपते (णै) र्गन्धशब्दस्पर्शरसादिभिः ॥२०१॥

उद्वेजनैश्च बहुभिर्वीभत्स उपजायते ।
निष्ठीवनाङ्गसङ्कोचैर्मुखनेत्रविकूणनैः ॥२०२॥
नासाप्रच्छादनाद्यैश्च वीभत्साभिनयः स्मृतः ।

इति वीभत्सः ।

सभाविमानमाहेन्द्रजालाद्यैस्तन्त्रिकर्मभिः ॥२०३॥

दिव्यदर्शनतो वाक्यशिल्परूपविशेषतः ।
तथा मनोरथाव्याप्तेर्जायते चाद्भुतो रसः ॥२०४॥

---

1. Q मर्षैः

स्वेदहर्षाश्रुरोमाञ्चैः प्रोक्षणै रतिप्रेक्षणैः ।
हाहाकारादिभिः साधुवादैरभिनयः स्मृतः ॥२०५॥

इत्यद्भुतः ।

इत्यष्टौ रसाः ।

**अथ चित्राभिनयः**

वागाद्यभिनयस्येह यो विशेषः क्वचित् क्वचित् ।
अनुक्त उच्यते यस्मात्स चित्राभिनयः स्मृतः ॥२०६॥

**इन्द्रियार्थाभिनयाः**

कृत्वा साचीकृतां दृष्टिं शिरः पार्श्वनतन्तथा ।
तर्जन्या कर्णदेशे तु शब्दञ्चाभिनयेद् बुधः ॥२०७॥

किञ्चिदाकुञ्चिते नेत्रे भ्रुवोरुत्क्षेप एव च ।
तथासगण्डयोः स्पर्शात् स्पर्शमेवं विनिर्दिशेत् ॥२०८॥

कृत्वा पताकौ मूर्ध्निस्थौ किञ्चित्प्रचलिताननः ।
निर्वर्णयन्त्या दृष्ट्या च रूपन्त्वभिनयेद्बुधः ॥२०९॥

किञ्चिदाकुञ्चिते नेत्रे कृत्वोत्फुल्लाञ्च नासिकाम् ।
एकोच्छ्वासेन हृष्टेष्टौ रसगन्धौ विनिर्दिशेत् ॥२१०॥

इति इन्द्रियार्थाभिनयाः ।

**ऋत्वभिनयः**

स्वचे(सर्वे)न्द्रियस्वस्थतया प्रसन्नवदनस्तथा ।
विचित्रकुसुमालोकैः शरदन्तु विनिर्दिशेत् ॥२११॥

गात्रसङ्कोचनाच्चाऽपि तथा चाऽग्न्यभिलाषतः ।
हेमन्तस्त्वभिनेतव्यः पुरुषैर्मध्यमोत्तमै (माधमैः)॥२१२॥

शिरोदन्तौष्ठकम्पेन गात्रसङ्कोचनेन च ।
क्रन्दितैश्च ससीत्कारैरधमः शीतमादिशेत् ॥२१३॥

ऋतुजानाञ्च पुष्पाणाङ्गन्धघ्राणैस्तथैव च ।
रूक्षस्य वायोः स्पर्शाच्च ग्रीष्मं (शिशिरं) चाऽभिनयेद्बुधः
(संनिरूपयेत् ?) ॥२१४॥

[सुवीजनैर्भूमितापैस्तथा स्वेदापमार्जनात् ।
संस्पर्शाच्चोष्णवातस्य] ग्रीष्मञ्चाऽभिनयेद्बुधः ।।२१५।।

कादम्बकैश्च मुकुलैः शाद्वलैः सेन्द्रगोपकैः ।
केकाभिश्च मयूराणां प्रावृषं सन्निरूपयेत् ।।२१६।।

मेघौघनादैर्गम्भीरैर्द्धाराप्रपतनैरपि ।
विद्युन्निर्घातघोषैश्च वर्षारात्रिं विनिर्दिशेत् ।।२१७।।

**पक्षीणामभिनय :**

शुकाश्च सारिकाश्चाऽपि सूक्ष्मा या चाऽपि पक्षिणी ।
त्रिपताकाङ्गुलीभ्यान्तु वलिताभ्याम्प्रयोजयेत् ।।२१८।।

शिखिसारसहंसाद्याः स्थूला येऽपि स्वभावतः ।
रेचकैरङ्गविक्षेपैस्तेषामभिनयो भवेत् ।।२१९।।

**पशूनामभिनय :**

खरोष्ट्रनागसिंहाश्च व्याघ्रगोमहिषादयः ।
गतिप्रचारैरङ्गैश्च तेऽभिनेयाः प्रयोक्तृभिः ।।२२०।।

**भूतादीनामभिनय :**

भूताः पिशाचा यक्षाश्च दानवा राक्षसास्तथा ।
इत्याद्यास्ते विनिर्देश्या भयोद्वेगैः सविस्मयैः ।।२२१।।

**पर्वतादीनामभिनय :**

पर्वतान् पांसुयोगेन वृक्षाँश्चैव समुच्छ्रितान् ।
प्रसारिताभ्यां [बाहुभ्यां] विक्षिप्ताभ्याम्प्रदर्शयेत् ।।२२२।।

**अन्याभिनया :**

शौर्यन्धैर्यञ्च दर्पञ्च गर्वौदार्यं समुच्छ्रयम् ।
ललाटदेशसंस्थेन त्वरालेन प्रदर्शयेत् ।।२२३।।

अधोमुखोत्तानतलौ हस्तौ किञ्चित्प्रसारितौ ।
कृत्वा निदर्शयेद्वेला ? (व्याल-) विलद्वारगृहं गुहाम् ।।२२४।।

कामशापग्रहग्रस्ताज्वरोपहतमानसाः ।
तेषामभिनयः कार्यो मुखगात्रविचेष्टितैः ॥२२५॥

दोलाभिनयनङ्कार्यन्दोलायास्तु विलोलनैः ।
संक्षोभेण च गात्राणां रज्वा सङ्ग्रहणेन वा ॥२२६॥

उत्तानौ तु करौ कृत्वा पताके स्वस्तिकस्थिते ।
उद्वाहितेन शिरसा तथा चोर्ध्वनिरीक्षणात् ॥२२७॥

प्रभातङ्गगनं रात्रिम्प्रदोषन्दिवसन्तथा ।
ऋतून् घनान् वनान्तांश्च[1] विस्तीर्णांश्च जलाशयान् ॥२२८॥

दिशो ग्रहान् सनक्षत्रान् किञ्चित् स्वस्थं च यद्भवेत् ।
अभिनेयन्तु तत्सर्वन्नानादृष्टिसमन्वितम्[2] ॥२२९॥

एभिरेव करैर्भूयस्तेनैव शिरसा पुनः ।
अधोनिरीक्षणेनाऽथ भूमिस्थान् सम्प्रदर्शयेत् ॥२३०॥

वस्त्रावगुण्ठनात् (वक्त्रावकु)सूयं रजोधूमानलौ तथा ।
भूमितापन्तथा चौष्णङ्कुर्याच्छायाभिलाषतः ॥२३१॥

ऊर्ध्वाकेकरदृष्टिस्तु मध्याह्ने सूर्यमादिशेत् ।
विद्युदुल्काघनरवान् विस्फुलिङ्गार्चिषस्तथा ॥२३२॥

स्रस्ताङ्गाक्षिनिमेषैश्च तेऽभिनेयाः प्रयोक्तृभिः ।
कृत्वा स्वस्तिकबन्धस्थौ पद्मकोशावधोमुखौ ॥२३३॥

सिंहर्क्षवानरव्याघ्रश्वापदांश्च निरूपयेत् ।
एकन्द्वे त्रीणि चत्वारि पञ्च षट् सप्त चाऽष्ट वा ॥२३४॥

नववा दश वा चैव गणनाङ्गुलिभिर्भवेत् ।
छत्रध्वजपताकाश्च निर्देश्या दण्डधारणैः ॥२३५॥

---

1. Q घनान्तश्च
2. Q समच्युितम्

एवमेतैर्बुधैर्भावाः प्रोक्ता अभिनयम्प्रति ।
नोक्ता ये च मया ह्यत्र लोकादुग्राह्यास्तु ते नटैः ।।२३६।।

लोकसिद्धम्भवेत्सिद्धन्नाट्यँल्लोके स्वभावजम् ।
तस्मान्नाट्यप्रसङ्गे तु प्रमाणं लोक इष्यते ।।२३७।।

इति चित्राभिनयः ।

**पदार्थसङ्ग्रहः**

अथात्रेऽस्मिन् शिरोक्षिभ्रूमुखरागाश्च वहवः ।
हस्तकाहस्तकरण[1]चालाहस्तप्रचारकाः ।।२३८।।

करकर्माणि क्षेत्राणि कट्यङ्घ्रिस्थानकानि च ।
चार्यश्च भूगता व्योमगताः करणरेचकाः ।।२३९।।

लक्षणन्नृत्तशालाया नटस्य च सुलक्षणम् ।
लक्षणन्नटदेहस्य पात्रस्याऽपि सुलक्षणम् ।।२४०।।

रेखाया लक्षणम्पश्चाल्लास्याङ्गानि च सौष्ठवम् ।
चित्रकालासकम्मुद्रा प्रमाणञ्च सभासदः ।।२४१।।

सभापतिः सभायाश्च निवेशो वृन्दलक्षणम् ।
वंशास्यलक्षणन्तत्र पश्चाद्रङ्गप्रवेशनम् ।।२४२।।

विविधन्नर्तनञ्चात्रास्मिन् ब्रूमहे लक्षणङ्क्रमात् ।
नृत्ययोग्यमदुष्टन्तु पञ्चेन्द्रिययुतं शिरः ।।२४३।।

एकोनविंशधा तच्च तदुद्देशक्रमो यथा ।
समन्धुतञ्च विधुतमवधूतमधोमुखम् ।।२४४।।

आकम्पितङ्कम्पितञ्चाऽऽधूतं च परिवाहितम् ।
उत्क्षिप्तं चोद्वाहितञ्चाप्यञ्चितञ्च निहञ्चितम् ।।२४५।।

तिर्यङ्नतोन्नतं स्कन्धानतमारात्रिकन्ततः ।
लोलितञ्च परावृतम्पार्श्वाभिमुखमित्यपि ।।२४६।।

---

1. क. हस्तकरसा

समम्

स्वाभाविकं समं शीर्षं स्वभावाभिनये मतम् ।

धुतम्

शिरसो_भ्रमणं तिर्यक् शनैस्तद्धुतमुच्यते ॥२४७॥

विधुतम्

तदेव द्रुतमानेन विधुतं तद् भवेच्छिरः ।

अवधूतम्

यदधः सकृदाक्षिप्तमवधूतन्तु तच्छिरः ॥२४८॥

अधोमुखम्

अधोमुखं स्थितञ्चापि शिरः प्राहुरधोमुखम् ।

आकम्पितम्

शनैराकम्पनादूर्ध्वमधश्चाऽऽकम्पितम्भवेत् ॥२४९॥

कम्पितम्

द्रुतन्तदेव बहुशः कम्पितङ्कम्पितं शिरः ।

आधूतम्

आधूतन्तु शनैस्तिर्यगूर्ध्वनीतं शिरो मतम् ॥२५०॥

परिवाहितम्

पर्यायतः पार्श्वगतं शिरः स्यात्परिवाहितम् ।

उत्क्षिप्तम्

उन्मुखावस्थितं प्रांशुशिर उत्क्षिप्तमुच्यते ॥२५१॥

उद्वाहितम्

सकृदुद्वाहितं चोर्ध्वमुद्वाहितमिति स्मृतम् ।

अञ्चितम्

किञ्चित्पार्श्वनतग्रीवशिरो विज्ञेयमञ्चितम् ॥२५२॥

### निहञ्चितम्

उत्क्षिप्तबाहुशिरसो विज्ञेयं तन्निहञ्चितम् ।

### तिर्यङ्नतोन्नतम्

तिर्यङ्नतोन्नतिम्प्राप्तं शिरस्तिर्यङ्नतोन्नतम् ॥२५३॥

### स्कन्धानतम्

स्कन्धानतन्तदाख्यातं स्कन्धे यन्निहितं शिरः ।

### आरात्रिकम्

स्कन्धे तु किञ्चिदाश्लिष्य भ्रान्तमारात्रिकम्मतम् ॥२५४॥

### लोलितम्

सर्वतो लोलनाच्चापि शिरस्तल्लोलितम्मतम् ।

### परावृत्तम्

परावृत्तात्तु करणात् परावृत्तं शिरः स्मृतः ॥२५५॥

### पार्श्वाभिमुखम्

पार्श्वाभिमुखमन्वर्थम्भवेत्पार्श्वेऽवलोकतः ।

### शिरोनुगाः

कपोलौ नासिकावायू रसनादशनाधराः ॥२५६॥

चिबुकं वदनं कण्ठः सदा त्वेते शिरोनुगाः ।

इति शिरोभेदाः ।

### दृष्टयः

अदोष भावसंव्यक्तलोकनन्दृष्टिरुच्यते ॥२५७॥

सा रस-स्थायि-सञ्चारिभावतस्त्रिविधा मता ।

### रसदृष्टयः

कान्ता हास्या च करुणा रौद्री वीरा भयानका ॥२५८॥

वीभत्सा चाद्भुतेत्यष्टौ विज्ञेया रसदृष्टयः ।

**स्थायिभावजा दृष्टय :**

स्निग्धा हृष्टा तथा दीना क्रुद्धा दृप्ता भयान्विता ।।२५६।।
जुगुप्सिता विस्मितेति दृशोऽष्टौ स्थायिभावजाः ।

**व्यभिचारिदृष्टय :**

शून्या च मलिना श्रान्ता लज्जिता शङ्किता तथा ।।२६०।।

मुकुला चार्धमुकुला ग्लाना जिह्मा च कुञ्चिता ।
वितर्किताऽभितप्ता च विषण्णा ललिताभिधा ।।२६१।।

आकेकरा विकोशा च विभ्रान्ता विप्लुता परा ।
त्रस्ता च मदिरेत्येता व्यभिचारिषु विंशतिः ।।२६२।।

सर्वास्ता मिलिताः सत्यः षट्त्रिंशद्दृष्टयो मताः ।
ब्रह्मापि दृष्टयः किन्तु[1] प्रत्येकं वक्तुमक्षमः ।।२६३।।

लाघवादुत्प्रबोधार्थं कटाक्षादिप्रकारतः ।
कटाक्षास्त्रिविधास्तत्र सितासितसितासिताः ।।२६४।।

तारावर्तनवैचित्र्यं कटाक्षः कथितो बुधैः ।

एतासां लक्षणमाह

**कान्ता**

हर्षप्रसादजा कान्ता सभ्रूक्षेपकटाक्षतः ।।२६५।।

**हास्या**

किञ्चिदाकुञ्चितपुटा हास्याल्पभ्रान्ततारका ।

**करुणा**

पतितोर्ध्वपुटा नासाग्रतारा करुणाऽस्रभाक् ।।२६६।।

1. Q सर्वा दृष्टीस्तु ब्रह्मापि

रौद्री

स्तब्धताराऽरुणा रौद्री रूक्षा भ्रुकुटिवक्रतः[1] ।

वीरा

दीप्ता विकसिता वीरा गम्भीरस्थिरतारका ॥२६७॥

बीभत्सा

निकुञ्चितपुटापाङ्गा[2] बीभत्सा घृणतारका ।

अद्भुता

सौम्या कुञ्चितपक्ष्माग्राऽद्भुताऽपाङ्गविकासिनी ॥२६८॥

भयानका

स्तब्धोद्वृत्तपुटोद्वृत्ततारा दृष्टिर्भयानका ।

इत्यष्टौ रसदृष्टयः ।

अथाऽष्टौ स्थायिदृष्टयः

स्निग्धा :

सभ्रूक्षेपानुसन्धाना स्निग्धा स्यादभिलाषिणी ॥२६९॥

हृष्टा

हृष्टा हसितगर्भा स्याद्विशत्तारानिमेषिणी ।

दीना

दीनाऽर्धपतितास्तब्ध (तोर्ध्वस्थ) पुटा सास्ता (स्रस्ताऽ) तिमन्थरा ॥२७७।

क्रुद्धा

कुटिला भ्रकुटी क्रुद्धा सरूक्षोद्वृत्ततारका ।

दृप्ता

सत्त्वमुद्गिरती दृष्टिर्दृप्ता विकसिता स्थिरा ॥२७१॥

1. Q क्रुरका

2. Q पाङ्गा

**भयान्विता**

विस्फारितोभयपुटा कम्पतारा भयान्विता ।

**जुगुप्सिता**

सङ्कोचितपुटाऽस्पष्टालोकिनी स्याज्जुगुप्सिता ॥२७२॥

**विस्मिता**

समा विकसितोद्वृत्ततारका विस्मिता मता ।

इत्यष्टौ स्थायिदृष्टयः ।

अथ विंशति व्यभिचारिदृष्टयः

**शून्या**

समतारापुटा स्तब्धा शून्या निष्कम्पदर्शना ॥२७३॥

**मलिना**

मलिनाच्छन्नतारेषत्प्रस्पन्दमानपक्ष्मला ।

**श्रान्ता**

श्रमप्रम्लायितपुटा श्रान्ताऽलसकनीनिका ॥२७४॥

**लज्जिता**

मिथोऽभिगामिपक्ष्माग्राऽधस्तारा लज्जिता मता ।

**शङ्किता**

गूढा चकिततारा च शङ्किता तिर्यगायता ॥२७५॥

**मुकुला**

स्फुरिता श्लिष्टपक्ष्माग्रा मुकुलोन्मीलतारका ।

**ग्लाना**

स्विन्नभ्रूपुटपक्ष्माग्रा ग्लाना शिथिलतारका ॥२७६॥

**जिह्मा**

किञ्चित्कुञ्चितपुटा जिह्मा तिर्यग्गूढा कनीनिका ।

अर्धमुकुला

अर्धव्याकोशितारार्द्धमुकुला पुटतारका ॥२७७॥

कुञ्चिता

ईषत्कुञ्चितपक्ष्माग्रा पुटतारा तु कुञ्चिता ।

वितर्किता

उद्वर्तितपुटोत्फुल्लाऽप्यधस्तारा वितर्किता ॥२७८॥

अभितप्ता

चलत्पुटाऽलसा ताराऽभितप्ता तापसम्प्लुता ।

विषण्णा

विषण्णा पतितापाङ्गा प्लुततारा निमेषिणी ॥२७९॥

ललिता

मधुरा कुञ्चितापाङ्गा ललिता भ्रूचलत्स्मिता ।

आकेकरा

आकेकरा दुरालोकिन्यपाङ्गार्धनिमेषिणी ॥२८०॥

विकोशा

विकोशातिचलत्तारा विकोशितपुटद्वया ।

विभ्रान्ता

विस्तीर्णोत्फुल्लमध्या तु विभ्रान्ता स्थिरतारका ॥२८१॥

विप्लुता

पुटप्रस्फुरितस्तब्धपतत्तारा तु विप्लुता ।

त्रस्ता

उत्कम्पोत्फुल्लतारा च त्रस्ता त्रासभ्रमत्पुटा ॥२८२॥

मदिरा

मदिरा त्रिविधा प्रोक्ता उत्तमा मध्यमाऽधमा ।

घूर्णा विकसिताऽपाङ्गा क्षामीभूतोत्तमा स्मृता ।।२८३।।

किञ्चिदाकुञ्चितपुटा चलत्तारा तु मध्यमा ।
अधोभागचरी तारा सा निमेषाऽधमा मता ।।२८४।।

इति विंशति व्यभिचारिदृष्टयः ।

दृष्टिद्वारानुगामिन्यस्ताराकर्मपुटादयः ।

इति दृष्टिभेदाः ।

ललाटे नेत्रपुटयोर्मध्यसीमासमन्विताः ।।२८५।।
तनुरोमस्यामरेखामारकार्मुकवक्रभ्रूः ।

**सप्तधा भ्रूः**

सहजा रेचितोत्क्षिप्ता कुञ्चिता पतिता तथा ।।२८६।।
चतुरा भ्रुकुटी चेति स्रुद्भिः सा सप्तधोदिता ।

**सहजा**

सहजा तु स्वभावस्था भावेषु परिकीर्तिता ।।२८७।।

**रेचिता**

भ्रूरेका ललितोत्क्षिप्ता रेचिता नृत्तसंश्रया ।

**उत्क्षिप्ता**

*[उत्क्षिप्ता सम्मतान्वर्था क्रमेण सह चाऽन्यथा ।।२८८।।[1]

**कुञ्चिता**

केवला सद्वितीया वा मृदुभृङ्गा तु कुञ्चिता ।[2]

**पतिता**

अधोगता तु पतिता पर्यायेण सहैव वा ।।२८९।।[3]]*

---

1. सं. रत्नाकरादुधृतः 7/425
2. सं. र. 6/437
3. नृ. र. को. 1/3/61 *-*कोष्ठस्थांशो नाऽस्ति पुस्तकेषु ।

**चतुरा**

सद्वितीयाऽल्पकस्पन्दा मन्थरा चतुरा भवेत् ।

**भ्रुकुटी**

सद्वितीया सहामूलोत्क्षिप्ता भ्रूर्भ्रुकुटी रुषि ॥२६०॥

इति भ्रूभेदाः ।

**मुखरागः**

येनाऽभिव्यज्यते चित्तवृत्तिर्धीरै रसात्मिका ।
रसाभिव्यक्तिहेतुत्वान्मुखरागः स उच्यते ॥२६१॥

**चतुर्धा मुखरागः**

स्वाभाविकः प्रसन्नश्च रक्तः श्याम इति क्रमात् ।
मुखरागश्चतुर्धेति तल्लक्षणमथोच्यते ॥२६२॥

तत्र स्वाभाविकोऽन्वर्थः स्वभावाभिनये मतः ।
स्वच्छः प्रसन्नः शृङ्गारेऽद्भुते हास्येऽपि जायते ॥२६३॥

रक्तोऽन्वर्थोऽद्भुते वीरे रौद्रे च करुणे तथा ।
भयानके च बीभत्से श्यामोऽन्वर्थो निरूपितः ॥२६४॥

मुखरागनियुक्तोऽसौ रसभावप्रकाशतः ।
शोभान्द्विगुणतान्धत्ते प्रकाशेनेव शर्वरीः ॥२६५॥

यथा रसन्तथा भावं दृष्टिं भ्रूवदनान्वितम् ।
यथोचितम्प्रकुर्वीत मुखरागम्प्रयोगवित् ॥२६६॥

इति चतुर्धा मुखरागः ।

**अथ षोडशविधो बाहुः**

नरस्य पक्षो निर्दोषो बाहुः षोडशधा तु सः ।
ऊर्ध्वस्थोऽधोमुखस्तिर्यंगपविद्धः प्रसारितः ॥२६७॥

अञ्चितो मण्डलगतिः स्वस्तिकोद्वेष्टितावपि ।
पृष्ठानुगस्तथाऽऽविद्धः कुञ्चितः सरलस्तथा ॥२६८॥
नम्र आन्दोलितः पश्चादुत्सारित इति क्रमात् ।

**ऊर्ध्वस्थः**

शीर्षादुच्चस्तथोर्ध्वस्थः

**अधोमुखः**

महीश्लेषी त्वधोमुखः ॥२९९॥

**तिर्यक्**

तिर्यक्पार्श्वगतः वक्षो

**अपविद्धः**

ऽपविद्धो निर्गतो वहिः ।

**प्रसारितः**

प्रसारितोऽग्रतो धावन्

**अञ्चितः**

उरः शिरोगतोऽञ्चितः ॥३००॥

**मण्डलगतिः**

अन्वर्थान्मण्डलगतिः

**स्वस्तिकः**

स्वस्तिको बाहुस्वस्तिकात् ।

**उद्वेष्टितः**

उद्वेष्टितो बहिर्गत्या

**पृष्ठानुगः**

पृष्ठानुगस्तु पृष्ठगः ॥३०१॥

**आविद्धः**

आविद्धोऽभ्यन्तराक्षिप्तः

**कुञ्चित :**

कुञ्चितो वक्रकूर्परात् ।

**सरल:**

सरलः पार्श्ववाही च

**नम्रः**

नम्रः किञ्चिद्विनम्रतः ॥३०२॥

**आन्दोलितः**

गतावान्दोलितोऽन्यर्थ—

**उत्सारितः**

रुत्सारितोऽन्यतः सरन् ।
बाहोरनुगतौ[1] भृत्यौ कूर्परस्कन्धकौ सदा ॥३०३॥

इति बाहुभेदाः ।

नर्तने रक्तिजनको व्यङ्ग्यवानर्थबोधकः ।
पादेतराङ्गुलीन्यासः विशेषो हस्तकः स्मृतः ॥३०४॥

योऽसंयुतः संयुतश्च नृत्तपूर्व इति त्रिधा ।
यत्रैकहस्ततश्चार्थप्रकाशः स्यादसंयुतः ॥३०५॥

हस्तयोर्योगतश्चार्थप्रकाशः संयुतो भवेत् ।
हस्ताभ्यां विप्रयुक्ताभ्यां प्रकाशे नृत्तहस्तकः ॥३०६॥

**असंयुक्तहस्ता :**

पताको हंसपक्षश्च गोमुखश्चतुरस्ततः ।
निःकुञ्चकः सर्पशिराः पञ्चास्यश्चाऽर्धचन्द्रकः ॥३०७॥

चतुर्मुखस्त्रिद्विमुखौ सूच्यास्यस्ताम्रचूडकः ।
सन्दंशहंसवक्त्राख्यौ ततःस्याद्गणगृध्रकः ॥३०८॥

---

1. S गुणो ?

खड्गास्यो मृगशीर्षश्च मुकुलः पद्मकोशकः ।
ऊर्णनाभाभिधो हस्तश्चाऽलपल्लवकस्ततः ॥३०९॥

अल्लपद्मोऽपि चाऽरालः शुकास्यो वल्गुलाभिधः ।
त्रिपताकः कर्त्तरी च मयूरः काकगूलकः ॥३१०॥

भ्रमरो मुष्टिक्रोडास्यौ शिखरश्च कपित्थकः ।
काकतुण्डो बालचन्द्रः खटकामुख इत्यपि ॥३११॥

अष्टत्रिंशदसंयुक्ता उद्दिष्टाश्चाथ संयुताः ।

## संयुक्तहस्ताः

अञ्जलिश्च कपोताख्यः कर्कटः स्वस्तिकस्तथा ॥३१२॥

दोलः पुष्पपुटोत्सङ्गौ खटकावर्द्धमानकः ।
गजदन्तोऽवहित्थश्च निषधो मकरस्तथा ॥३१३॥

शृङ्खलो वर्द्धमानश्च दर्दुरो योगमुष्टिकः ।
ततो द्विशिखरश्चेति संयुक्ताः दश सप्त च ॥३१४॥

## नृत्तहस्ताः

चतुरश्रौ तथोद्वृत्तौ हस्तौ तलमुखाभिधौ ।
स्वस्तिकौ विप्रकीर्णाख्यावरालखटकामुखौ ॥३१५॥

आविद्धवक्त्रौ सूच्यास्यौ रेचितावर्धरेचितौ ।
नितम्बौ पल्लवौ केशबन्धावुत्तानवञ्चितौ ॥३१६॥

लताख्यौ करिहस्तौ[च]पक्षवञ्चितकावुभौ ।
पक्षप्रद्योतकौ दण्डपक्षौ गरुडपक्षकौ ॥३१७॥

ऊर्ध्वमण्डलिनौ हस्तौ पार्श्वमण्डलिनावपि ।
उरोमण्डलिनौ स्यातामुरःपार्श्वार्द्धमण्डलौ ॥३१८॥

मुष्टिकस्वस्तिकावन्यौ नलिनीपद्मकोशकौ ।
अलपल्लवनाम्नावुलपद्माभिधौ तथा ॥३१९॥

उल्बणौ ललितौ पश्चाद्वरदाभयदौ ततः ।
वलिताविति विज्ञेया द्वात्रिंशन्नृत्तहस्तकाः ॥३२०॥

असंयुक्तहस्तानां लक्षणानि

**पताकः**

कुञ्चिताङ्गुष्ठकः सम्यक्तर्जनीमूलमाश्रितः ।
पताको यत्र संहतः प्रसारिततलाङ्गुलिः ॥३२१॥

**हंसपक्षः**

हंसपक्षः पताकस्य यदाल्पार्धा कनीयसी ।

**गोमुखः**

गोमुखो हंसपक्षस्य यद्यूर्द्ध्वाङ्गुष्ठको भवेत् ।

**चतुरः**

चतुरो गोमुखाङ्गुष्ठमध्यमामूलगो यदा ।

**निकुञ्चः**

निकुञ्चो यत्र चतुरसमीभूतकनीयसी ॥३२३॥

**सर्पशिराः**

पताको निम्नमध्यो यः स तु सर्पशिराः करः ।

**पञ्चाननः**

पञ्चाननो यदाङ्गुल्यः साङ्गुष्ठविरलोर्ध्वगाः ॥३२४॥

**अर्धचन्द्रकः**

पञ्चास्याङ्गुलिसङ्घातोऽर्द्धचन्द्रोऽङ्गुष्ठकोऽन्यतः ।

**चतुर्मुखः**

पञ्चास्यतर्जनीमूललग्नाङ्गुष्ठश्चतुर्मुखः ॥३२५॥

**त्रिमुखः**

कनिष्ठाङ्गुलिलग्नश्चेत् त्रिमुखः स्याच्चतुर्मुखात् ।

**द्विमुख :**

त्रिमुखानामिकाङ्गुष्ठकनिष्ठौ ? द्विमुखे श्रितौ ॥३२६॥

**सूचीमुख :**

तदा सूचीमुखः स्याद् द्विमुखाङ्गुष्ठाग्रमध्यमा ।

**ताम्रचूड :**

ताम्रचूडो यदा नम्रा चेत्सूचीमुखतर्जनी ॥३२७॥

**सन्दंश :**

सन्दंशो यत्र पञ्चास्यतर्जन्यङ्गुष्ठदंशतः ।

**हंसवक्त्र :**

हंसास्यो यत्र सन्दंशस्यान्तराश्रितमध्यमा ॥३२८॥

**रणगृध्रक :**

हंसवक्त्राङ्गुष्ठपार्श्वप्रसृतो रणगृध्रकः ।

**खड्गास्य :**

खड्गास्योऽनामिकालग्नहंसास्यश्चेत्तदा भवेत् ॥३२९॥

**मृगशीर्षक :**

खड्गास्यस्य यदा तूर्द्ध्वा तर्जनी मृगशीर्षकः ।

**मुकुल :**

यत्राग्रमिलिताङ्गुल्यः[1] साङ्गुष्ठा मुकुलस्तदा ॥३३०॥

**पद्मकोशक :**

धनुर्नताङ्गुल्यङ्गुष्ठा विरलाः पद्मकोशकः ।

**ऊर्णनाभ :**

पद्मकोशांगुल्यङ्गुष्ठकुञ्चितादूर्णनाभकः ॥३३१॥

---

1. P यत्र कुघ्नलितांगुल्यः० यत्र कुद्मिलिता० ?

**अलपल्लवः**

पार्श्वगाश्चेत्करतले मुक्ताङ्गुल्योऽलपल्लवः ।

**अलपद्म :**

अलपद्मस्तदा यत्र विपर्यासोऽलपल्लवः ॥३३२॥

**अराल :**

अरालो यदि वक्रा चेद्धनुराकृतितर्जनी ।

**शुकतुण्ड :**

शुकतुण्डस्त्वरालस्य वक्रे तर्जन्यनामिके ॥६३३॥

**वल्गुल :**

शुकतुण्डमध्यमावक्रा[1] स्खलिताङ्गुष्ठा[1] वल्गुलः ।

**त्रिपताक :**

त्रिपताकः पताकस्य वक्रिताऽनामिकाङ्गुलिः ॥३३४॥

**कर्त्तरी**

तर्जनीमध्यमे श्लिष्टे[2] त्रिपताकस्य कर्त्तरी ।

**मयूर :**

कर्त्तर्याऽनामिकाङ्गुष्ठौ लग्नाग्रौ चेन्मयूरकः ॥३३५॥

**काङ्गूल :**

मयूराङ्गुष्ठको यत्र काङ्गूले समतोर्ध्वभाक्[3] ।

**भ्रमर :**

कनिष्ठानामिके कीर्णे भ्रमरस्ताम्रचूडकः ॥३३६॥

**मुष्टि :**

अङ्गुल्यग्राश्रिततलो मुष्टिरङ्गुष्ठवेष्टितः ।

---

1. P वक्रस्खलिताङ्गुष्ठवल्गुलः
2. P. भिन्ने
3. स. रत्नाकरे 'काङ्गूलेऽनामिका वक्रा भवेदूर्ध्वा कनीयसी ।
ऊर्ध्वास्त्रेताग्निसंस्थानास्तर्जन्यङ्गुष्ठमध्यमाः ॥ 7/140

**क्रोडास्य :**

कनिष्ठाप्रसारिता मुष्टेश्चेद्वाराहमुखस्तदा ? ॥३३७॥

**शिखर :**

यदा चोद्ध्वीकृताङ्गुष्ठमुष्टिः शिखर उच्यते ।

**कपित्थक :**

शिखराङ्गुष्ठकाग्रे स्यात्तर्जनी चेत्कपित्थकः ॥३३८॥

**काकतुण्ड :**

कपित्थाङ्गुष्ठतर्जन्योर्विश्लेषात्काकतुण्डकः ।

**बालचन्द्रक :**

अतिप्रसारितः काकतुण्डः स बालचन्द्रकः ॥३३९॥

**खटकामुख :**

कपित्थानामिकासूक्ष्मे तूर्ध्वे चेत् खटकामुखः ।

इत्यष्टात्रिंशदसंयुतहस्ताः ।

संयुतहस्तानां लक्षणानि

**अञ्जलि :**

पताकाभ्यान्तु हस्ताभ्यां संश्लेषादञ्जलिः स्मृतः ॥३४०॥

**कपोत :**

श्लिष्टमूलाग्रपार्श्वौ चेत्करौ यत्र कपोतकः ।

**कर्कट :**

कर्कटो यत्र[1] हस्तस्याङ्गुल्योऽन्योन्यान्तरास्ततः[2] ॥३४१॥

**स्वस्तिक :**

पताकौ मणिबन्धस्थौ स्वस्तिकौ स्वस्तिको यदा ।

---

1. L यस्य
2. P स्मृताः ?

**दोल :**

दोलः षताकावुत्तानतलान्योन्योपरिश्रितौ ॥३४२॥

**पुष्पपुट :**

सर्पशीर्षौ मिलद्बाह्यपार्श्वौ (र्श्वौ:) पुष्पपुटो भवेत् ।

**उत्सङ्ग :**

अन्योन्यस्कन्धदेशस्थाराला (वराला?) वुत्सङ्गस्तदा ॥३४३॥

**खटकावर्धमानक :**

मणिबन्धस्थखटकौ खटकावर्धमानकः ।

**गजदन्त :**

सर्पशीर्षौ कूर्परस्थौ व्यत्यासौ गजदन्तकः ॥३४४॥

**अवहित्थ :**

शुकतुण्डौ मिलद्वक्रावबहित्थो यदोरसि ।

**निषध :**

मुकुलो चेत्कपित्थेन[1] वेष्टितो निषधः स्मृतः ॥३४५॥

**मकर :**

मकरोऽधस्तलौ चन्द्रावन्योन्यौ परिसंस्थितौ ।

**शृङ्खल :**

शृङ्खलः शृङ्खलाकारौ ताम्रचूडौ यदा युतौ ॥३४६॥

**वर्धमानक :**

हंसपक्षौ स्वस्तिकौ चेद्वर्धमानः पराङ्मुखौ ।

**दर्दुर :[2]**

तिर्यक्तलसुसम्बद्धावर्धचन्द्रौ तु दर्दुरः ॥३४७॥

1. L. यदा केपित्थेन
2. P ददंरः

योगमुष्टि :

उपर्यूर्ध्वंश्लिष्टमुखे मुष्टी चेद्योगमुष्टिकः ।

द्विशिखर :

द्विशिखरः शिखराग्रौ मिलितावूर्ध्ववक्त्रकौ ॥३४८॥

इति संयुतहस्ताः ।

नृत्तहस्ता :

चतुरश्रौ

समानकूर्परांसौ चेत् प्राङ्मुखौ खटकामुखौ ।
वक्षसोऽष्टाङ्गुलतस्थौ चतुरश्रौ प्रकीर्तितौ ॥३४९॥

उद्वृत्तौ

व्यावृत्तौ हंसपक्षौ चेदुद्वृत्तौ वक्षसोग्रतः ।

तलमुखौ

उद्वृत्तौ पार्श्वयोस्तिर्यङ्मुखौ तलमुखौ स्मृतौ ॥३५०॥

स्वस्तिकौ

अश्लिष्टहंसपक्षाभ्यां स्वस्तिकः स्वस्तिकौ मतौ ।

विप्रकीर्णौ

विच्युते स्वस्तिके शीघ्रं विप्रकर्णौ तदोदितौ ॥३५१॥

अरालखटकामुखौ

तत्रैवारालखटकावरालखटकामुखौ ।

आविद्धवक्त्रौ

आविद्धवक्त्रौ व्यस्ताग्रकूर्परांसविलासितौ ॥३५२॥

सूच्यास्यौ

मध्याङ्गुष्ठाऽहिशिरसौ सूच्यौ तर्जनिके बहिः ।

रेचितौ

पताकौ वा द्रुतावन्तौ हंसपक्षौ तु रेचितौ ॥३५३॥

### अर्धरेचितौ

एकेन चतुरश्रेण तौ स्यातामर्धरेचितौ ।

### नितम्बौ

नितम्बौ निर्गतौ स्कन्धान्नितम्बक्षेत्रतः पुनः ।।३५४।।

### पल्लवौ

अधोमुखस्वस्तिकौ तु शिथिलौ पल्लवौ मतौ ।

### केशबन्धौ

केशबन्धौ केशदेशान्निर्गतौ पार्श्वतः पुनः ।।३५५।।

### उत्तानवञ्चितौ

त्रिपताकौ कपोलाग्रौ चेत्तदोत्तानवञ्चितौ ।

### लताकरौ

तिर्यक्सृतौ दोलितौ चेत् त्रिपताकौ लताकरौ ।।३५६।।

### करिहस्तौ

करिहस्तौ स्पृशत् कर्णौ खटकान्यल्पौ लताकरौ[1] ।

---

1. Q करिहस्तौ लतान्दोलौ यत्र चेत्खटकामुखौ ।
   L. करिहस्तौ लतान्दोलेत्क्षेपे खटकर्णगः ?
   V. करिदंतहस्तौ कर्णे खटकान्दोलौ लताकरौ ।

   सं. र. 'स्पृशत्करिकराकारः पार्श्वयोश्चेल्लताकरः ।
   उन्नतो दोलितोऽन्यस्तु कर्णस्थः खटकामुखः ।।

   त्रिपताकोऽथवा यत्र करिहस्तममुं विदुः ।
   नन्वन्यहस्तवत् कस्मान्नात्र द्विवचनं कृतम् ।।

   ब्रूमो यत्रैकशब्देन सजातीयावुभौ करौ ।
   उक्तौ तत्र द्विवचनं घटवच्चतुरस्रवत् ।।

   भिन्नशब्दौ विजातीयौ यौ वा द्विवचनं तयोः ।
   यथा घटपटौ स्यातामरालखटकामुखौ ।।' 7/248-51

**पक्षवञ्चितौ**

त्रिपताकौ कटीशीर्षे न्यस्ताग्रौ पक्षवञ्चितौ ॥३५७॥

**पक्षप्रद्योतकौ**

तावेव चेत्परावृत्तौ पक्षप्रद्योतकौ स्मृतौ ।

**दण्डपक्षौ**

अधः सृतौ तु तौ हंसपक्षौ चेद्दण्डपक्षकौ ॥३५८॥[1]

**गरुडपक्षकौ**

अधोमुखतला[2]विद्धौ ज्ञेयौ गरुडपक्षकौ ।

**ऊर्ध्वमण्डलिनौ**

ऊर्ध्वमण्डलिनौ हस्तावूर्ध्वदेशविवर्तनात् ॥३५९॥

**पार्श्वमण्डलिनौ**

तावेव पार्श्वविन्यस्तौ पार्श्वमण्डलिनौ स्मृतौ ।

**उरोमण्डलिनौ**

करावुद्वेष्टापवेष्टावुरोमण्डलिनौ पुनः[3] ॥३६०॥

---

'करिहस्ताकृतिस्त्वेको दृश्यतेऽत्र लताकरः ।
इति कर्तव्यता त्वन्या स्यादेकवचनं ततः ॥
न चात्र करिहस्तत्वमेकैकत्र घटत्ववत् ।
न चात्रैकः करीहस्तशब्दवाच्योऽपरः करः ॥
नैकशेषो न च द्वन्द्वो यतो द्विवचनं भवेत् ।
आश्रितं चैकवचनं मुनिना सर्वदर्शिना ॥ 7/252-4

---

1. P. पार्श्वसृतभुजौ हंसपक्षौ चेद्दण्डपक्षकौ ।
सं.र. 'उपवक्षस्थलं हंसपक्षे गच्छति पार्श्वतः ।
सविलासोऽपरस्तिर्यक् प्रसृतश्चेल्लताकरः ।
क्रमादङ्गान्तरेणैवं दण्डपक्षौ तदा करौ ।
हस्तप्रसारणं त्वत्र युगपन्मेनिरेऽपरे । 7/257-8

2. P लता

3. P पुरः

### उरः पार्श्वार्द्धमण्डलौ

यदाऽलपल्लवारालावुरोर्द्ध्वभ्रमणक्रमात् ।
पार्श्वावतौ[1] सुविज्ञेयाव[2]ुरःपार्श्वार्धमण्डलौ ।।३६१।।

### मुष्टिकस्वस्तिकौ

खटकौ स्वस्तिकावृत्तौ तदा मुष्टिकस्वस्तिकौ ।

### नलिनीपद्मकोशौ

व्यावर्तितौ पद्मकोशौ नलिनीपद्मकोशकौ ।।३६२।।

### अलपल्लवौ

उद्वेष्टितक्रियौ वक्षःक्षेत्रस्थावलपल्लवौ ।

### अलपद्मौ

स्कन्धान्तिकमथोपेत्य प्रसृतावलपद्मकौ ।। ३६३।।

### उल्वणौ

ऊर्ध्वप्रसारिताविद्धौ विज्ञेयावुल्वणौ करौ[3] ।

### ललितौ

पल्लवौ च शिरोदेशे सम्प्राप्तौ ललितौ स्मृतौ ।।३६४।।

### वरदाभयहस्तकौ

अरालौ कटिशीर्षस्थौ वरदाभयदौ तथा[4] ।

### वलितौ

कूर्परस्वस्तिकयुतौ[5] लताख्यौ वलितौ विदुः[6] ।।३६५।।

---

1. P. पार्श्वार्द्धंतस्तु
2. P विज्ञेया०
3. P च तौ
4. P तदा V. अरालौ कटिपार्श्वस्थौ०
5. P गतौ
6. P वलिताविति

आनन्त्यादभिनेयानां सन्त्यनन्ताः परे कराः ।
नोक्ता ये च[1] मया ह्यत्र लोकाद्ग्राह्यास्तु ते बुधैः ।।३६६।।

लोको वेदास्तथाध्यात्मम्प्रमाणन्त्रिविधं स्मृतम् ।
तस्मान्नाट्यप्रसङ्गे तु[2] प्रमाणँल्लोक इष्यते ।।३६७।।

परन्तु लोकवृत्त्या च दृश्यन्तेऽन्ये करा यथा ।
सजातीयो विजातीयावष्टत्रिंशदसंयुतौ ।।३६८।।

४ ७
ते सर्वे नृत्तहस्ताः स्युस्तत्सङ्ख्या खाब्धिसप्तत:[3] ।
एतावत्संयुताहस्ताः लक्ष्यज्ञैरूह्यन्तां क्रमात् ।।३६९।।

रोलंवी ? मुख्यपाश्र्वाग्रो लिङ्गाख्यश्चापरः करः ।[4]
नास्ति कश्चिदहस्तस्तु नाट्यार्थोऽभिनयो यतः[5] ।।३७०।।

अर्थाभिनयतस्तेषां नान्यतेषद्विकारके ?[6]
देशं कालं प्रयोगञ्च अर्थंयुक्तिमवेक्ष्य च[7] ।।३७१।।

हस्ताः सर्वे प्रयोक्तव्या नृभिः स्त्रीभिर्विशेषतः ।
अर्थस्यैकस्य भूयांसः संभवन्ति यदा कराः ।।३७२।।

शोभाकारी तदा तत्र त्वेकः कार्यः प्रयोक्तृभिः ।
करानुचरको नित्यम्मणिबन्धः (करः) प्रकीर्तितः ।।३७३।।

इति हस्तभेदाः ।

---

1. P एव
2. L & P षु
3. L तत्संख्याब्धिसप्ततः
4. L . अंशस्यस्याभावः । अस्पष्टोऽयमशः .
5. P ना. शा. 9/154 पू. अभिनयं प्रति
6. L नाट्याभिनयस्तेषां नाना ते षड्बिकारके (अस्पष्टः)
7. L व्यावृत्तिश्च विशेषतः

सर्वेषामेवं हस्तानां नाट्यनृत्यप्रदर्शिभिः ।
विज्ञातव्यम्प्रयत्नेन करणन्तु चतुर्विधम् ॥३७४॥

चतुर्धा हस्तकरणम् ।

अथावेष्टितमेकं* स्यादुद्वेष्टितमथापरम्[1] ।
व्यावर्त्तितन्तृतीयञ्च चतुर्थम्परिवर्त्तितम् ॥३७५॥

आवेष्टितम्

आवेष्ट्यन्ते यदाङ्गुलयस्तर्जन्याद्या यथाक्रमम् ।
अभ्यन्तरेण करणन्तदावेष्टितमुच्यते ॥३७६॥

उद्वेष्टितम्

उद्वेष्ट्यन्ते यदाङ्गुलयस्तर्जन्याद्या बहिर्मुखाः[2] ।
क्रमशः करणं विप्रास्तद्वेष्टितमुच्यते ॥३७७॥

व्यावर्तितम्

आवर्त्यन्ते कनिष्ठाद्या[3] ह्यङ्गुल्योऽभ्यन्तरेणातु ॥३७८॥
(यत्तु क्रमेण करणन्तद्व्यावर्त्तितमुच्यते)-[3] ॥३॥

परिवर्त्तितम्

[2]उद्वर्त्यन्ते कनिष्ठाद्या बाह्यतः क्रमशो यदा ।
अङ्गुल्यः करणं सम्यक् तदुक्तम्परिवर्त्तितम् ॥३७९॥

नृत्तेऽभिनययोगे वा हस्तकैर्वर्त्तनाश्रयैः ।
शिरोऽक्षिमुखरागादियुक्तै-रर्थम्प्रदर्शयेत्[1] ॥३८०॥

इति करणानि ।

---

1. L मतः परम्
2. L मुखीः
3. L ग्रन्थे मंशस्यस्याभावः

## अथ वर्तना

[2]युगपद् बाहुकरणां समस्तव्यस्तयोगतः ।[2]
द्रुतवैचित्र्यचलनं शोभासम्भृतवर्त्तना ॥३८१॥

[3]ते रेखामनतिक्रम्य भूरिभङ्गिभृतो भुजाः ।[3]
रेच्यन्ते लक्ष्यतत्त्वज्ञै[4]श्चालकाः कीर्तितास्तदा ॥३८२॥

इति चालकाः ।

## हस्तप्रचाराः

उत्तानोऽधोऽग्रतः पार्श्वतिर्यक्सम्मुखपूर्वकाः ।
तलाः हस्तप्रचाराः स्युः षडित्यन्वर्थतः क्रमात् ॥३८३॥

## विंशति करकर्माणि

उत्कर्षणं विकर्षञ्च तथा चाऽऽकर्षणम्पुनः ।
परिग्रहो निग्रहश्च त्वाह्वानं रोधनन्तथा ॥३८४॥

संश्लेषश्च वियोगश्च रक्षणम्मोक्षणन्तथा ।
विक्षेपो धूननञ्चैव विसर्जस्तर्जनन्तथा ॥३८५॥

छेदनम्भेदनञ्चैव स्फोटनम्मोटनञ्तथा ।
ताडनञ्चेति हस्तानां स्फुटकर्माणि विंशतिः ॥३८६॥

इति करकर्माणि ।

## हस्तक्षेत्राणि

पार्श्वद्वन्द्वम्पुरस्ताच्च पश्चादूर्ध्वमधः शिरः ।
ललाटकर्णस्कन्धोरोनाभयः कटिशीर्षके ॥३८७॥

---

1-1. L हस्तव्यस्तसुयोगतः
2-2. L ग्रन्थे ग्रंशस्यस्याभावः
3. L. ग्रंशस्यस्याभावः
4. P. तस्तज्ञैः

ऊरुद्वयञ्च हस्तानां क्षेत्राणीति त्रयोदश (चतुर्दश) ।

इति हस्तक्षेत्राणि ।

**अथ कटीभेदाः**

निर्दोषा नृत्तयोग्या च देहमध्या कृशा कटी ।।३८८।।

समा छिन्ना निवृत्ता च रेचिता कम्पिता तथा ।

उद्वाहितेति सा प्रोक्ता षड्विधा चाथ लक्षणम् ।।३८९।।

**समा**

अचञ्चला समा प्रोक्ता नर्त्तनारम्भगोचरा ।

**छिन्ना**

मध्यस्थचलनाच्छिन्ना पार्श्वे[1] तिर्यङ्मुखे सति ।।३९०।।

**निवृत्ता**

पराङ्मुखस्यऽभिमुखी निवृत्ता स्यान्निवर्तनी[2] ।

**रेचिता**

सर्वतो भ्रमणादुक्ता रेचिता कटी भ्रमणे ।। ३९१।।

**कम्पिता**

तिर्यग्गतागताक्षिप्रं कटी ज्ञेया च कम्पिता ।

**उद्वाहिता**

नितम्बपार्श्वोद्वहनाच्छनैरुद्वाहिता कटी ।।३९२।।

वक्षः पृष्ठोदराणि स्युः कटिभेदानुयोग्यतः ।

इति कटिभेदाः ।

**अथ पादाः**

स्वभावभूमिसञ्चारो व्यङ्गोऽनु[3] पाद ईरितः ।।३९३।।

---

1. V पात्रे
2. P. तिता
3. P नुः

समोऽञ्चितः कुञ्चितश्च सूच्यग्रतलसञ्चरः ।
उद्घट्टितो घट्टितश्च घटितोत्सेधकस्ततः ॥३९४॥

ताडितो[1] मर्दितश्चाऽथ पर्ष्णिगश्चाऽग्रगस्तथा ।
पार्श्वगश्चेति पादः स्यात् त्रयोदशविधस्ततः सः ॥३९५॥

समः

स्वभावरचितो भूमौ समस्थानः समो मतः ।

अञ्चित :

भूस्थपार्ष्णिः समुत्क्षिप्ताऽग्रतलश्चाञ्चितः स्मृतः ॥३९६॥

कुञ्चित :

कुञ्चिताङ्गुलिरुत्क्षिप्तपार्ष्णिर्मध्ये कुञ्चितः ।

सूची

उत्क्षिप्तपार्ष्णिरङ्गुष्ठा भुवि सूची प्रकीर्तिता ॥३९७॥

अग्रतलसञ्चर :

उत्क्षिप्तपार्ष्णिः प्रसृतोऽङ्गुष्ठोऽग्रतलसञ्चरः ।

उद्घट्टित :

प्रपादस्थः पतद्भूमावङ्घ्रिरुद्घट्टितो मतः ॥३९८॥

घटित :

घट्टितः क्षितिघाती स्यात्पार्ष्ण्यङ्घ्रिप्रेरणेन सः[2] ।

घट्टितोत्सेध :

घ्नन्मुहुर्घटितोत्सेधोऽग्रपार्ष्णिभ्याम्भुवङ्क्रमात् ॥३९९॥

ताडित :[3]

पार्ष्णिस्थो भूमिमग्रेण यो निहन्ति स ताडितः[3] ।

---

1. P त्राटितो
2. P य सः
3. P त्राटितः

मर्दित :

यस्तिरश्चा तले[1]नोर्वीम्प्रमृद्गाति स मर्दितः ॥४००॥

पार्ष्णिग :

पृष्ठतोऽप-[2] सरन्पार्ष्ण्या पार्ष्णिगः पाद उच्यते ।

अग्र :

अग्रगोऽग्रे द्रुतं सर्पन्नग्रगः पाद ईरितः ॥४०१॥

पार्श्वग :

स्थितः पार्श्वेऽथवा[3] पार्श्वं व्रजन् पार्श्वग इष्यते ।
तलाङ्गुलीपार्ष्णिगुल्फजङ्घाजानूरवस्तथा[4] ॥४०२॥
सह यान्त्यङ्घ्रिचारेण तत्तद्गत्यानुसारतः ।

इति चरणभेदाः ।

स्थानका :

सन्निवेशविशेषोऽङ्गे स्थानं यद्भक्तिनिश्चलः ॥४०३॥
तानि स्थानान्यनेकानि वक्ष्येऽहं कति लक्षणम् ।
समपादम्पार्ष्णिविद्धं स्वस्तिकं सहंताभिधम् ॥४०४॥
उत्कटं वर्धमानाख्यन्नन्द्यावर्तञ्च मण्डलम् ।
चतुरश्रञ्च वैशाखमायतञ्चाऽवहित्थकम् ॥४०५॥
पृष्ठोत्तानतलञ्चाश्वक्रान्ताख्यञ्चैक पादकम् ।
ब्राह्मयञ्च वैष्णवं शैवमालीढं स्थानकन्ततः ॥४०६॥
प्रत्यालीढं खण्डसूचिः समाऽसमादिसूचिके ।
कूर्मासनन्नागबन्धङ्गारुडं वृषभासनम् ॥४०७॥
सप्तविंशतिरित्येतदुद्दिष्टमथ लक्षणम् ।

---

1. P रंचपदेनोर्वी
2. P ०ग्र
3. P यदा
4. P. यदाङ्गुलीपार्श्वगुल्फजङ्घाजानूरथस्वयम् ?

### समपादम्

वपुः स्वभाविकम्पादौ वितस्त्यन्तरितावृजू[1] ॥४०८॥
अग्रे समौ समनखौ समपादन्तदोच्यते ।

### पार्ष्णिविद्धम्

पार्ष्णिरङ्गुष्ठसंश्लिष्टम्पार्ष्णिविद्धमिति स्मृतम् ॥४०९॥

### स्वस्तिकम्

मिथः श्लिष्टकनिष्ठाङ्घ्रिस्वस्तिकौ स्वस्तिकन्तदा ।

### संहतम्

पादाङ्गुष्ठौ तथा गुल्फौ[2] संहतन्तन्मि[3]-थो युतौ ॥४१०॥

### उत्कट :

उत्कटेऽङ्घ्रीसमनखौ समौ वा[4] कुञ्चितावपि ।

### वर्धमानम्

वर्धमाने तु चरणौ तिर्यञ्चौ पार्ष्णिसङ्गतौ ॥४११॥

### नन्द्यावर्तम्

नन्द्यावर्ते वर्धमानपादावष्टाङ्गुलान्तरौ ।

### मण्डलम्

पक्षस्थौ चरणौ त्र्यंस्रावेकतालान्तरौ भुवि ॥४१२॥
चतुस्तालान्तरौ वापि मण्डलस्थानकन्तदा ।

### चतुरश्रम्

न्द्यावर्ताङ्घ्रिमध्यन्तु द्वितालञ्चतुरंश्रके ॥४१३॥

### वैशाखम्

वैशाखे वर्धमानस्य सार्धतालत्रयान्तरम्[5] ।

---

1. L. व्रजन्
2. P. थांगुल्यौ
3. P. संहतेतन्नि०
4. P विच्युतौ
5. P ०रे

**आयतम्**

वामस्तालान्तरस्त्र्यस्रः समोऽन्यश्चायतम्मतम् ॥४१४॥

**अवहित्थम्**

अवहित्थन्तदेव स्याद्विपर्यासेन पादयोः ।

**पृष्ठोत्तानतलम्**

भूलग्नाङ्गुलिपृष्ठोऽङ्घ्रिः पश्चादेकोऽपरः पुरः ॥४१५॥
सामो यत्र तदादिष्टम्पृष्ठोत्तानतलम्बुधैः ।

**अश्वक्रान्तम्**

समस्यैकस्य पादस्य पार्ष्णिक्षेत्र[1]-गतोऽपरः ॥४१६॥
सूचीपादः स्वपार्श्वे वाऽश्वक्रान्तं स्थानकन्तदा ।

**एकपादम्**

समस्याङ्घ्रेस्तु जानूर्ध्वं बाह्यपार्श्वे यदीतरः[2] ॥४१७॥
बाह्यपार्श्वेन लग्नोऽङ्घ्रिरेकपादन्तदोच्यते ।

**ब्राह्म्यम्**

एकः समोऽङ्घ्रिरन्यश्चेत् कुञ्चितीकृत्य पृष्ठतः ॥४१८॥
जानुसन्धिसमत्वेनोत्क्षिप्तो ब्राह्म्यन्तदुच्यते ।

**वैष्णवम्**

सममेकं विधायाङ्घ्रिमन्यश्चेत् कुञ्चितो मनाक् ॥४१९॥
पुरः प्रसारितस्तिर्यक् त्र्यस्रपक्षस्थितोऽथवा ।

सार्द्धन्द्वितालान्तराले वैष्णवं स्थानकन्तदा ॥४२०॥

**शैवम्**

अङ्घ्रेः[3] समस्य वामस्थ जानुशीर्षसमोऽपरः ।
उद्वृतः कुञ्चिताकारो यत्र शैवमुशन्ति तत् ॥४२१॥

---

1. L&P. देश
2. L. यदोत्तरः
3. V ङ्घ्रिः

### आलीढम्

वामो यत्र निषण्णोरुरम्बरे हस्तमात्रतः ।
दक्षिणश्चरणः सव्ये पञ्चतालं प्रसारितः ॥४२२॥
त्र्यस्त्रौ द्वावपि तद्विद्यादालीढं स्थानकम्महत् ।

### प्रत्यालीढम्

आलीढाङ्गविपर्यासात् प्रत्यालीढमुदीरितम् ॥४२३॥

### खण्डसूची

एकोऽङ्घ्रिः कुञ्चितोऽन्यस्तु भूसंलग्नोरुपार्ष्णिकः ।
तिर्यक् प्रसारितो यत्र खण्डसूची तदोच्यते ॥४२४॥

### समसूची

पार्ष्णिजङ्घोर्रुसंलग्नधरणी चरणौ यदा ।
तिर्यक्प्रसारितौ स्यातां समसूची तदोच्यते ॥४२५॥

### विषमसूची

सूचीपादौ पृथग्यत्र पुरः पश्चात्प्रसारितौ ।
युगपद्गदितन्तज्ज्ञैः स्थानं विषमसूचि तत् ॥४२६॥

### कूर्मासनम्

दक्षिणश्चरणो जानुबाह्यगुल्फमिलत्क्षितिः ।
वामः समो भवेद्यत्र कूर्मासनमतो विदुः ॥४२७॥

### नागबन्धम्

यदोपविश्य वामोरोः पृष्ठे न्यस्यति दक्षिणाम् ।
जङ्घान्तदा नागबन्धं स्थानम्भरतसम्मतम् ॥४२८॥

### गारुडम्

आकुञ्चितः पुरो वामः पश्चादन्यस्तु जानुना ।
भुवङ्गतो यदा पादौ गारुडङ्गदितन्तदा ॥४२९॥

### वृषभासनम्

वियुते संयुते वा चेज्जानुनी संस्थिते क्षितौ ।
वृषभासनमाख्यातम्मुनिभिर्भरतादिभिः ॥४३०॥

स्थानान्यन्यानि भूरीणि लोकवृत्तानुसारतः ।
यथेप्सितन्तथा कार्यं स्थानकन्नाट्यकोविदैः ॥४३१॥

इति स्थानकानि ।

### चार्यः

यत्र पादस्य जङ्घाया उरोः कट्यास्तथैव च ।
समानकरणाविद्धा सा चारी परिकीर्त्यते ॥४३२॥

विधातोपगताश्चार्यो व्ययच्छन्ते परस्परम् ।
यस्मादङ्गसमायुस्तस्तस्माद् व्यायाम उच्यते ॥४३३॥

### चारी

एकपादप्रचारो यः सा चारीत्यभिधीयते ।

### करणम्

द्विपादकरणं यत्तु तच्चारी करणं स्मृतम् ॥४३४॥

### खण्डः

करणैस्त्रिभिश्च संयुक्तः खण्ड इत्यभिधीयते ।

### मण्डलम्

खण्डैस्त्रिभिश्चतुर्भिर्वा संयुक्तम्मण्डलम्भवेत् ॥४३५॥

चारीभिः प्रस्तुतन्नृत्तञ्चारीभिश्चेष्टितन्तथा ।
चारीभिः शस्त्रमोक्षञ्च चार्यो युद्धेषु कीर्तिताः ॥४३६॥

यदेतत्प्रस्तुतन्नाट्यन्तच्चारीष्वेव संस्थितम् ।
न हि चार्या विना किञ्चिन्नाट्याङ्गं सम्प्रवर्तते ॥४३७॥

भौमी चाकाशिका चेति द्विधा चारी प्रकीर्तिता ।
समपादा स्थितावर्ता शकटास्या च विच्यवा ॥४३८॥

अध्यर्धिका चाषगतिरेडकाक्रीडिता तथा ।
समोत्सरित मत्तल्ली मत्तल्ल्युत्स्पन्दिताऽड्डिता ।।४३९।।
स्पन्दिताऽवस्पन्दिताख्या ? बद्धा च जनिताभिधा ।
[ऊरूद्वृत्रेति सम्प्रोक्ताः षोडशा कशिकीरिमाः]

[ इति मार्गीचार्यः ]

**देशी चारीषु भौम्यः**

रथचक्रा परावृत्ततला नूपुरविद्धका ।।४४०।।

तिर्यङ्मुखा मराला च करिहस्ता कुलीरिका ।
विश्लिष्टा कातरा पार्ष्णिरेचिताप्यूरुताडिता ।।४४१।।

ऊरुवेणी तलोद्वृत्ता हरिणत्रासिकापरा ।
अर्धमण्डलिका तिर्यक्कुञ्चिता च मदालसा ।।४४२।।

सञ्चारितोत्कुञ्चिता च स्तम्भक्रीडनिकाभिधा ।
चारी लङ्घितजङ्घाख्या स्फुरिताख्याऽवकुञ्चिता ।।४४३।।

तथा सघट्टिता खुत्ता स्वस्तिका तलदर्शिनी ।
पुराट्यर्धपुराटी च सारिका स्फुरिका ततः ।।४४४।।

निकुट्टिका लताक्षेपप्यड्डुस्खलितिका तथा ।
समस्खलितिका भौम्य पञ्चत्रिंशदितीरिताः ।।४४५।।

[ मार्गी आकाशचार्यः ]

अतिक्रान्ताप्यपक्रान्ता पार्श्वक्रान्ता मृगप्लुता ।
ऊर्ध्वजानुरलाता च सूची नूपुरपादिका ।।४४६।।

दोलापादा दण्डपादा विद्युद्भ्रान्ता भ्रमर्यपि ।
भुजङ्गत्रासिताक्षिप्ता विद्धोद्वृत्तेति षोडशः ।।४४७।।

**देशी आकाशचार्यः**

पुरःक्षेपा च विक्षेपाऽपक्षेपा डमरी ततः ।
जङ्घालङ्घनिका चाङ्घ्रिताडिताऽलत्तिकाभिधा ।।४४८।।

जङ्घावर्ता वेष्टनञ्चोद्वेष्टनञ्चोत्क्षेपाभिधः ।
पृष्ठोत्क्षेपस्तथा सूचीविद्धा प्रावृत्तकन्ततः ।।४४९।।

उल्लोलश्चेत्येकत्रिंशच्चार्यश्चाकाशपूर्विकाः ।
सर्वास्ता मिलिता सन्त्योद्व्यशीति रथलक्षणम् ॥४५०॥

**समपादा**

पादैः निरन्तरकृतैः पुरतः पार्श्वतोऽपि वा ।
स्थानेन समपादेन समपादाभिधा भवेत् ॥४५१॥

**स्थितावर्ता**

भूमिधृष्टेन पादेन कृत्वाभ्यन्तरमण्डलम् ।
पुनरुत्सारयेत्पादं स्थितावर्ता तु सा स्मृता ॥४५२॥

**शकटास्या**

यत्रोद्धृत्वा पूर्वकायं पादोऽग्रतलसञ्चरः ।
प्रसार्योद्वाहितमुरः शकटास्या तदा भवेत् ॥४५३॥

**विच्यवा**

विच्युत्य समपादायाः पादौ यदि तलाग्रतः ।
निकुट्टयेतां धरणीमुच्यते विच्यवा तदा ॥४५४॥

**अध्यर्धिका**

सव्यस्य पृष्ठतो वामचरणस्तु यदा भवेत् ।
सव्यापसर्पणम्पार्श्वे ज्ञेया साऽध्यर्धिका तदा ॥४५५॥

**चाषगतिः**

पादः प्रसारितः सव्यः पुनश्चैवोपसर्पितः ।
वामः सव्याषसर्पी च[1] तदा चाषगतिः स्मृता ॥४५६॥

**एडकाक्रीडिता**

तलसञ्चरपादाभ्यामुत्प्लुत्य पतनन्तु यत् ।
पर्यायशश्च क्रियते एडकाक्रीडिता तदा ॥४५७॥

---

1. P. सूच्यापसर्पी च

### मत्तल्ली

उभाभ्यामपि पादाभ्यां घूर्णमानोपसर्पणैः ।
सजङ्घा स्वस्तिकाभ्यान्तु मत्तल्ली सा प्रकीर्तिता ।।४५९।।

### समोत्सरितमत्तल्ली

तलसञ्चरपादाभ्यां घूर्णमानोपसर्पणैः ।
समोत्सरितमत्तल्ली चारी सद्भिरुदाहृता ।।४६०।।

### उत्स्पन्दिता

कनिष्ठाङ्गुलिभागेनाऽङ्गुष्ठभागेन च क्रमात् ।
रेचकस्यानुकारेण शनैरुत्स्पन्दितोदिता ।।४६०।।

### अड्डिता

समाङ्घ्रेरग्रपृष्ठाभ्यामन्योऽग्रतलसञ्चरः ।
निघृष्टश्चरणो यत्र क्रमात्तामड्डितां विदुः ।।४६१।।

### स्पन्दिता

निषण्णोरुः समो वामो दक्षिणोंऽघ्रिः प्रसारितः ।
पञ्चतालान्तरन्तिर्यग्यस्यां सा स्पन्दिता मता ।।४६२।।

### अवस्पन्दिता

अङ्घ्रिचारविपर्यासात् सैवावस्पन्दिता मता ।

### बद्धा

उरुद्वयस्य वलनञ्जङ्घास्वस्तिकसंयुतम् ।।४६३।।
उरूभ्यां वलनं यस्मात् सा बद्धा चार्युदाहृता ।

### जनिता

तलसञ्चरपादेन जनिता चार्युदाहृता ।।४६४।।

### उरूद्वृत्ता

तलसञ्चरपादस्य पार्ष्णिर्बाह्योन्मुखी यदा ।
जङ्घाञ्चिता तथोद्वृत्ता उरूद्वृत्तेति सा स्मृता ।।४६५।।

**रथचक्रा**

चतुरश्रं समाश्रित्य भूलग्नोऽङ्घ्री प्रसर्पतः ।
पुरतः पृष्ठतश्चैको[1] रथचक्रा तदोच्यते ॥४६६॥

**परावृत्ततला**

पश्चादुत्तानिततलश्चरणः प्रसृतो बहिः ।
यस्याम्परावृत्ततला प्रसिद्धा लोकवर्त्मनि ॥४६७॥

**नूपुरविद्धा**

स्थित्वा स्वस्तिकबन्धेन पार्ष्ण्योः प्रपदयोस्तथा ।
रेचितौ चरणौ यत्र सोक्ता नूपुरविद्धका ॥४६८॥

**तिर्यङ्मुखा**

वर्धमाने स्थितौ स्थाने वामदक्षिणतो यदा ।
सरतो द्रुतमानेन पादौ तिर्यङ्मुखा तदा ॥४६९॥

**मराला**

नन्द्यावर्तस्थितौ पादौ पार्ष्णिपादाग्ररेचितौ ।
पुरः प्रसारितौ यस्यां सा मराला विधीयते ॥४७०॥

**करिहस्त :**

संहतस्थानके स्थित्वा पार्श्वाभ्याङ्घर्षतः क्षितिम् ।
चरणौ यत्र सा चारी करिहस्ता प्रकीर्तिता ॥४७१॥

**कुलीरिका**

नन्द्यावर्तस्थयोरङ्घ्र्योस्तिर्यक्सृत्वा कुलीरिका ।

**विश्लिष्टा**

पार्ष्णिविद्धस्थितौ पादौ चेद्विश्लिष्योपसर्पतः ॥४७२॥
यद्वा प्रसर्पतः प्रोक्ता सा विश्लिष्टाभिधा बुधैः ।

**कातरा**

नन्द्यावर्तस्थपादाभ्याम्पश्चात् सृत्वा तु कातरा ॥४७३॥

---

1. P. पृष्ठतावेको

### पार्ष्णिरेचिता

पार्ष्णिपार्श्वंगते स्थाने स्थित्वा चेद्रेचिता कृता ।
पार्ष्णिस्तदोदिता चारी निष्णातैः पार्ष्णिरेचिता ।।४७४।।

### उरुताडिता

बकपादे स्थितः स्थाने भूस्थेन चरणेन चेत् ।
उरुन्ताडयति प्रोक्ता तदा चार्यूरुताडिता ।।४७५।।

### उरुवेणी

उरुस्थस्वस्तिकाकारावङ्घ्री संधर्षतो भुवम् ।
पार्श्वाभ्यां यत्र तामाहुरुरुवेणीम्मनीषिणः ।।४७६।।

### तलोद्वृत्ता

अङ्गुलीपृष्ठभागेन पुरतः सरतो द्रुतम् ।
प्रपदे यत्र सा चारी तलोद्वृत्ता मता सताम् ।।४७७।।

### हरिणत्रासिका

कुञ्चिते स्वस्तिकीकृत्य वलितान्ते तले यदा ।
अङ्घ्र्योत्प्लुत्य निपतेद्धरिणत्रासिका तदा ।।४७८।।

### अर्धमण्डलिका

भूमिघृष्ट्या बहिर्नीतावावर्तेते शनैः क्रमात् ।
चरणौ यत्र तामाहुरर्धमण्डलिकाम्बुधाः ।।४७९।।

### तिर्यक्कुञ्चिता

यत्राङ्कुच्य तिरश्चीनञ्चरणम्प्रक्षिपेन्मुहुः ।
तान्तिर्यक्कुञ्चितां चारीमाहुः श्रीभरतादयः ।।४८०।।

### मदालसा

इतस्ततश्च चरणौ स्थापयेत् भुवि संस्थुलौ ।
मत्तवद्यत्र तामाहुश्चारीन्धीरा मदालसाम् ।।४८१।।

### सञ्चारिता

आकुञ्चितोऽङ्घ्रिरुत्क्षिप्योत्क्षिप्याऽन्येनाङ्घ्रिणा यदा ।
युज्यतेऽन्यस्तु संसर्प्पेच्चारी सञ्चारिता तदा ॥४८२॥

### उत्कुञ्चिता

उत्क्षिप्य कुञ्चितौ पादौ न्यसेदेकैकमग्रतः ।
यस्यां सोत्कुञ्चिता चारी प्रोक्ता चाञ्जनिसूनुना ॥४८३॥

### स्तम्भक्रीडनिका

तिर्यक्प्रसारितैकाङ्घ्रि पार्श्वमन्यत्तलेन चेत् ।
मुहुः संयोजयेदुक्ता स्तम्भक्रीडनिका तदा ॥४८४॥

### लङ्घितजङ्घिका

स्थानेङ्घ्रिः खण्डसूच्याख्ये तिष्ठन्नाकृष्य वेगतः ।
लङ्घ्यतेऽन्याङ्घ्रिणा यत्र सोक्ता लङ्घितजङ्घिका ॥४८५॥

### स्फुरिता

स्फुरिताऽग्रे सृतौ वेगाद् भूस्पृशोः पादपार्श्वयोः ।

### अवकुञ्चिता

क्रमादाकुञ्चिताङ्घ्रिभ्याम्पश्चाद्गत्याऽवकुञ्चिता ॥४८६॥

### सङ्घट्टिता

स्थाने विषमसूच्याख्ये स्थित्वोत्प्लुत्य पतन्भुवि ।
अङ्घ्री सङ्घट्टयेद्यत्र सोक्ता संघट्टिताभिधा ॥४८७॥

### खुत्ता

धरण्याञ्चरणाग्रेण घातः खुत्ता निगद्यते ।

### स्वस्तिका

चरणः स्वस्तिकाकारकारितः स्वस्तिका भवेत् ॥४८८॥

**तलदर्शिनी**

यत्राङ्घ्री संहतस्थाने स्थित्वा तिर्यक् पृथक्कृतौ ।
स्पर्शतो बाह्यपार्श्वाभ्याम्भुवं सा तलदर्शिनी ॥४८९॥

**पुराटिका**

निकुट्टनान्मिथोऽङ्घ्रिभ्यामुद्धताभ्याम्पुराटिका ।

**अर्धपुराटिका**

उद्वृत्तेन निवृट्टेन चरणेन निकुट्टनम् ॥४९०॥
उद्वृत्तस्याऽन्यपादस्य यत्र साऽर्धपुराटिका ।

**स्फुरिका**

पुरःसरणमङ्घ्रिभ्यां समाभ्यां स्फुरिका भवेत् ॥४९१॥

**निकुट्टिका**

स्थितिस्तु चरणाग्रेण कुञ्चितेन निकुट्टिका ।

**सरिका**

चरणोऽग्रं सरत्येको यत्र सा सरिका मता ॥४९२॥

**लताक्षेप :**

पश्चान्न्यस्य पुरस्ताच्च प्रसार्य चरणं यदि ।
निकुट्टयेद्भुवन्तेन लताक्षेपस्तदोदितः ॥४९३॥

**अड्डुस्खलितिका**

स्खलिते चरणे तिर्यगड्डुस्खलितिका भवेत् ।

**समस्खलितिका**

पुरतः पृष्ठतस्तिर्यक् चरणौ युगपद्यदा ॥४९४॥
स्खलतः प्रोच्यते चारी समस्खलितिका तदा ।

इति भूमिचार्यः ।

**अथ आकाशिकीचार्यः**

### अतिक्रान्ता

कुञ्चितम्पादमुत्क्षिप्य पुरतः सम्प्रसारयेत् ॥४६५॥
उत्क्षिप्य पातयेच्चैनमतिक्रान्ता तु सा स्मृता ।

### अपक्रान्ता

उरुभ्यां वलनङ्कृत्वा कुञ्चितम्पादमुद्धरेत् ॥४६६॥
पार्श्वे विनिक्षिपेच्चैनमपक्रान्ता तु सा स्मृता ।

### पार्श्वक्रान्ता

कुञ्चितम्पादमुत्क्षिप्य पार्श्वोत्तानोत्थितन्न्यसेत् ॥४६७॥
उद्घट्टितेन पादेन पार्श्वक्रान्ता तु सा स्मृता ।

[ अथ देशीचार्यः ]

### हरिणप्लुता

अतिक्रान्तक्रमङ्कृत्वा समुत्प्लुत्य निपातयेत् ॥४६८॥
अन्यजङ्घाञ्चिता[1] क्षिप्ता सा ज्ञेया हरिणप्लुता ।

### ऊर्ध्वजानुः

कुञ्चितोत्क्षिप्तपादस्य जानुस्तनसमं यदा ॥४६९॥
न्यस्य स्तब्धीकृतोऽन्योऽङ्घ्रिरूर्ध्वजानुस्तदा भवेत् ।

### अलाता

पृष्ठप्रसारितोऽङ्घ्रिश्चेदन्योर्वभिमुखन्तलम् ॥५००॥
कृत्वा पार्ष्णिः स्वपार्श्वे क्ष्मान्यस्ताऽलाता तदोदिता ।

### सूची

कुञ्चितम्पादमुत्क्षिप्य जानूर्ध्वं सम्प्रसारयेत् ॥५०१॥

---

1. L अन्यजं व्यञ्चिता ?

पातयेच्चाऽग्रयोगेन सा सूची त्वथवाऽपरे ।
उरुपार्श्वेन विन्यस्य पादं यत्र प्रसारयेत् ॥५०२॥
तीक्ष्णाग्रीकृत्य तामाहुः सूचीन्ताण्डववेदिनः ।

### नूपुरपादिका

पृष्ठतो ह्यञ्चितङ्कृत्वा पादमग्रतलेन तु ॥५०३॥
द्रुतन्निपातयेद्भूमौ चारी नूपुरपादिका ।

### डोलपादा

कुञ्चितम्पादमुत्क्षिप्य पार्श्वात्पार्श्वन्तु दोलयेत् ॥५०४॥
पातयेदञ्चितञ्चैव डोलपादा तु सा स्मृता ।

### दण्डपादा

नूपुरश्चरणङ्कृत्वा पुरतः सम्प्रसारयेत् ॥५०५॥
क्षिप्त्वा स्वस्तिकमावर्त्य चरणन्तिर्यगूर्ध्वतः ।
क्षिप्रमाविद्धकरणन्दण्डपादा तु सा स्मृता ॥५०६॥

### [मार्गी] विद्युद्भ्रान्ता

पृष्ठतो वलितम्पादं शिरोद्वृत्त(घृष्ट)प्रसारयेत् ।

### [ देशी ]

पुरतो वाऽङ्घ्रिमुत्क्षिप्य ललाटस्योपरिद्रुतम् ॥५०७॥
भ्रामयित्वा भुवि न्यसेद् विद्युद्भ्रान्ताममूं विदुः ।

### भ्रमरी [मार्गीभेदः]

अतिक्रान्तक्रमङ्कृत्वा त्रिकन्तु परिवर्तयेत् ॥५०८॥
द्वितीयपादभ्रणात्तलेन भ्रमरी स्मृता ।

### भुजङ्गत्रासिता

कुञ्चितम्पादमुत्क्षिप्य त्र्यस्रमूरुं विवर्तयेत् ॥५०९॥
कटोजानुविवर्ताच्च भुजङ्गत्रासिता भवेत् ।

### आक्षिप्ता

कुञ्चितम्पादमुत्क्षिप्य चोत्क्षिप्य त्वञ्चितन्न्यसेत् ॥५१०॥
जङ्घा स्वस्तिकसंयुक्ता त्वाक्षिप्ता नाम सा भवेत् ।

### आविद्धा

स्वस्तिकस्याऽग्रतः पादः कुञ्चितस्तु प्रसारितः ॥५११॥
पातयेदञ्चिताविद्धः साऽऽविद्धा नामतः स्मृता ।

### उद्वृत्ता

पादमाविद्धमावेष्ट्य समुत्प्लुत्य निपातयेत् ॥५१२॥
परिवृत्य द्वितीयञ्च सोद्वृत्ता चारिका मता ।

### पुरः क्षेपा

अङ्घ्रिं कुञ्चितमुत्क्षिप्य पुरो विस्तार्य वेगतः ॥५१३॥
विन्यसेदवनौ यत्र पुरःक्षेपा भवेद्यसौ ।

### विक्षेपा

पुरो गगनभागे चेत्प्रसार्य चरणम्मुहुः ॥५१४॥
आकुञ्चयेत्तदाचारी विक्षेपा सूरिसम्मता ।

### अपक्षेपा

बाह्यपार्श्वेन यत्रोरोः पृष्ठं स्पृष्ट्वेतरत्पदम् ॥५१५॥
नितम्बनिकटं याति साऽपक्षेपा प्रकीर्तिता ।

### डमरी

डमर्याकुञ्चितस्याङ्घ्रेर्वामदक्षिणतो भ्रमात् ॥५१६॥

### जङ्घालङ्घनिका

किञ्चिदाकुञ्चितम्पादमङ्घ्रिणाऽन्येन लङ्घयेत् ।
गगने चेत्तदा चारी जङ्घालङ्घनिका मता ॥५१७॥

### अङ्घ्रिताडिता

विस्तार्याऽङ्घ्री प्लुतङ्कृत्वा गगनन्ताडयेन्मिथः ।
यदा पादतलद्वन्द्वन्तदा चार्यङ्घ्रिताडिता ॥५१८॥

### अलाता

अलाताङ्घ्रौ पृष्ठगते शीघ्रमन्याङ्घ्रिलङ्घिते ।
अलातेति तदा प्रोक्ता मुनिभिर्भरतादिभिः ॥५१९॥

### जङ्घावर्ता

तलमन्तर्भ्रमस्याङ्घ्रेर्जानुपृष्ठे क्षिपेद्यदि ।
बहिर्भ्रमस्य तत्पार्श्वे जङ्घावर्ता तदा भवेत् ॥५२०॥

### वेष्टनम्[1]

अङ्घ्रिणैकेन चेदन्यं वेष्टयेद्वेष्टनन्तदा ।

### उद्वेष्टनम्

उद्वेष्टनं वेष्टयित्वा पृष्ठतोऽङ्घ्रौ प्रसारिते ॥५२१॥

### उत्क्षेपः

आकुञ्चितस्य पादस्य पुरतः पृष्ठतस्तथा ।
उत्क्षेपो जानुपर्यन्तमुत्क्षेपः कथ्यते बुधैः ॥५२२॥

### पृष्ठोत्क्षेप :

स चेत्पृष्ठत एव स्यात् पृष्ठोत्क्षेपममुं विदुः ।

### विद्धा [देशीभेदः]

पादयोः स्वस्तिकेऽस्यैकः किञ्चिदान्दोलितः पुर ॥५२३॥
कुञ्चितश्चरणो यत्र सा विद्धा बोधिता बुधैः ।

### मकरध्वजजीवनम्

ललिता वलिता मूर्त्तिरुद्वृत्ताश्चरणो भवेत् ॥५२४॥
यत्र तत्प्रावृतं ज्ञेयम्मकरध्वजजीवनम् ।

### उल्लोल :

उल्लोलः स्याच्चरणयोः क्रमेणोल्लालनादृदिवि ॥५२५॥

---

1. V वलनं

पादश्चार्यां[1] यथा पादो धरणीमेव गच्छति ।
एवं हस्तश्चरित्वा[2] तु कटीदेशं समाश्रयेत् ॥५२६॥
एताश्चार्यो: मुनिप्रोक्ता ललिताङ्गक्रियात्मिकाः ।

इत्याकाशिकाचार्यः ।

अथ नृत्तकरणप्रकरणम्

[ करणानि ]

हस्तपादसमायोगः करणन्नर्त्तनस्य च ॥५२७॥
अनन्तानि च तान्यत्र प्रयोगवशतः कति ।
करणानि प्रवक्ष्यामि बन्धनृत्तस्य सिद्धये ॥५२८॥

लीनं समनखञ्छिन्नङ्गङ्गावतरणन्ततः ।
वैशाखरेचितम्पश्चाज्जनितङ्करणन्ततः ॥५२९॥

तलपुष्पपुटम्पश्चात्पार्श्वजानुस्ततः परम् ।
ऊर्ध्वादिजानुर्दण्डादिपक्षन्तलविलासितम् ॥५३०॥

विद्युद्भ्रान्तन्ततश्चन्द्रावर्त्तकञ्च निशुम्भितम् ।
ललाटतिलकन्नाम लतावृश्चिकनामकम् ॥५३१॥
इति षोडशकोद्दिष्टमथ लक्षणमुच्यते ।

**लीनम्**

पताकाञ्जलिवक्षःस्थम्प्रसारितशिरोधरम् ॥५३२॥
निकुञ्चितञ्चांसकूटन्तल्लीनं करणम्भवेत् ।

**समनखम्**

श्लिष्टौ समनखौ पादौ लताहस्तौ प्रलम्बितौ ॥५३३॥
देहः स्वाभाविको यत्र भवेत् समनखन्तु तत् ।

1. V पादजंघां

### छिन्नम्

अलपद्मः कटीदेशे छिन्ना पर्यायशः कटी ।।५३४।।
वैशाखस्थानकेनेह तच्छिन्नङ्करणम्भवेत् ।

### गङ्गावतरणम्

ऊर्ध्वाङ्गुलितलौ पादौ त्रिपताकावधोमुखौ ।।५३५।।
हस्तौ शिरः सन्नतञ्च गङ्गावतरणञ्च तत् ।

### वैशाखरेचितम्

रेचितौ हस्तपादौ च कटिग्रीवौ च रेचितौ ।।५३६।।
वैशाखस्थानकेनैतद्भवेद्वैशाखरेचितम् ।

### जनितम्

एको वक्षःस्थितो हस्तो द्वितीयश्च प्रलम्बितः ।।५३७।।
लताग्रसंस्थितः पादो जनितङ्करणम्भवेत् ।

### पार्श्वजानु

एकः समस्थितः पाद ऊरुपृष्ठे स्थितोऽपरः ।।५३८।।
मुष्टिहस्तश्च वक्षःस्थः पार्श्वजानु तदुच्यते ।

### ऊर्ध्वजानु

कुञ्चितम्पादमुत्क्षिप्य जानु हस्तसमम्भवेत् ।।५३९।।
प्रयोगवशगौ हस्तावूर्ध्वजानु प्रकीर्तितम् ।

### दण्डपक्षम्

ऊर्ध्वजानु विधायाथ तस्योपरिलतान्न्यसेत् ।।५४०।।
दण्डपक्षन्तु तत्प्रोक्तङ्करणन्नृत्तवेदिभिः ।

### तलविलासितम्

ऊर्ध्वाङ्गुलितलः पादः पार्श्वेणोर्ध्वं समुत्थितः ।।५४१।।
प्रकुर्यादञ्चिततलौ हस्तौ तलविलासिते ।

### विद्युद्भ्रान्तम्

विद्युद्भ्रान्ता यत्र चारी करौ तदनुगामिनौ ।।५४२।।
विद्युद्भ्रान्तमिदम्प्रोक्तमुद्धतस्य परिक्रमे ।

### चन्द्रावर्तनम्

यत्राङ्घ्रिः पार्श्वतः कर्णदेशे तूर्ध्वम्प्रसारितः ।।५४३।।

तस्याङ्गुष्ठङ्गृहीत्वा तु पाणिना चाऽन्यदेशतः ।
शनैर्भ्रमरिकाङ्कृत्वा चन्द्रावर्तन्तदोदितम् ।।५४४।।

### निशुम्भितम्

पृष्ठतः कुञ्चितौ पादौ वक्षस्तत्र समुन्नतम् ।
तिलके च करः स्थाप्यस्तन्निशुम्भितमुच्यते ।।५४५।।

### ललाटतिलकम्

पृष्ठतः कुञ्चितङ्कृत्वा पादस्याङ्गुष्ठकेन तु ।
ललाटे तिलकङ्कुर्याल्ललाटतिलकञ्च तत् ।।५४३।।

### लतावृश्चिकम्

अञ्चितः पृष्ठतः पादः कुञ्चितोर्ध्वतलाङ्गुलिः ।
लताख्यश्च करो वामस्तल्लतावृश्चिके भवेत् ।।५४७।।

यत्र हस्तः प्रधानः स्यात् पादस्तदनुगो भवेत् ।
यदा पादः प्रधानस्तु करस्तदनुगः स्मृतः ।।५४८।।
एवं विचार्य शक्तिञ्च करणं योजयेत्सुधी ।

इति करणानि ।

### रेचकाः

रेचकानथ वक्ष्यामश्चतुरो भरतोदितान् ।।५४९।।
पादयोः करयोः कट्या ग्रीवायाश्च भवन्ति ते ।

**पादरेचक :**

पार्ष्ण्यङ्गुष्ठाग्रयोरन्तर्बहिश्च सततङ्गतिः ॥५५०॥
नमनोन्नमनोपेता प्रोच्यते पादरेचकः ।

**कररेचक :**

परितो भ्रमणन्तूर्णं हस्तयोर्हंसपक्षयोः ॥५५१॥
तत्पर्यायेण रचितं स भवेत्कररेचकः ।

**कटीरेचक :**

विरलः प्रसृताङ्गुष्ठाङ्गुल्लेस्तिर्यग् भ्रमेण वा(च)
[ सर्वतो भ्रमणं कट्याः कटीरेचकमूचिरे । ][1]

**ग्रीवारेचक :**

ग्रीवाया विधुतभ्रान्तिः कथ्यते कण्ठरेचकः ॥५५३॥
करणाङ्गं रेचकञ्च भरतः प्राह सर्वदा ।

इति रेचकलक्षणम् ।

**नृत्तमण्डपनिर्माणम्**

कर्तृभिः समभूमौ[2] च कर्तव्यः नृत्तमण्डपः ॥५५४॥

शोधयित्वा वसुमतीं प्रमाणन्निर्दिशेत्ततः ।
अणू रजश्च बालश्च लिक्षा यूका यवस्तथा ॥५५५॥

अङ्गुलञ्चैव हस्तश्चेत्यथ लक्षणमुच्यते ।
अणवोऽष्टौ रजः प्रोक्तन्तान्यष्टौ बाल उच्यते ॥५५६॥

वालास्त्वष्टौ भवेल्लिक्षा यूका लिक्षाष्टकम्भवेत् ।
यूकास्त्वष्टौ यवः प्रोक्तो यवास्त्वष्टौ तथाङ्गुलम् ॥५५७॥

---

1. सं.र. 7/895
2. V भूम्याम्

अङ्गुलानि तथा हस्तश्चतुर्विंशतिरुच्यते ।
त्रिरामहस्तनिर्माणम्पूर्वपश्चिमदीर्घता ॥५५८॥

दक्षिणोत्तरतो मानं तिथिर्हस्तमितन्ततः ।
वास्तुशास्त्रविधानेन सर्वन्तत्र विचार्य च ॥५५९॥

तत्तत्स्थाने यथायोग्यं रचितः कनकचित्रकैः ।?
पट्टवस्त्रवितानाढ्यः पुष्पप्राकारशोभितः ॥५६०॥

सुगन्धागरुकर्पूरधूपदीपैर्मनोहरः ।
तस्मिन्सिंहासनं रम्यं रत्नकाञ्चनभूषितम् ॥५६१॥

पूर्वस्यां पश्चिमायां वा स्थापयेन्मङ्गलन्दिशि ।
सिंहासनस्याऽभिमुखं नटो नृत्यं समाचरेत् ॥५६२॥

इति नृत्तमण्डपम् ।

**नर्त्तकस्य गुणदोषा :**

नर्त्तनस्य सुविज्ञत्वं सर्वाभिनयनेतृता ।
लयतालयतिज्ञत्वं ग्रहज्ञत्वं विनीतता ॥५६३॥

गीतवाद्यानुकारित्वं रसभावविविक्तता ।
आरम्भमोक्षविज्ञत्वम्मधुररसता तथा ॥५६४॥

श्रमित्वं सावधानत्वं सुबुद्धित्वं सभाजयः ।
नर्त्तकस्य गुणास्त्वेते तद्देहस्यापि लक्षणम् ॥५६५॥

अव्यङ्गाङ्गमकुब्जत्वन्नात्युच्चत्वमपीनता ।
सुरेखा सौष्ठवत्वञ्च सकोमलविलासिता ॥५६६॥

श्यामत्वं वापि गौरत्वं रूपवत्वन्निरोगता ।
इत्यादिलक्षणन्देहे नर्त्तकस्य वरं स्मृतम् ॥५६७॥

गुणदेहलक्षणाभावन्तन्नटन्नावलोकयेत् ।

इति नर्त्तकः ।

## पात्रलक्षणम्

पात्रं स्यान्नर्तनाधारो नृत्ते प्रायेण नर्तकी ॥५६८॥

मुग्धम्मध्यम्प्रगल्भञ्च पात्रन्त्रेधेति कीर्तितम् ।
मुग्धादेर्लक्षणम्प्रोक्तं यौवनत्रितयङ्क्रमात् ॥५६९॥

ईषच्चलितनेत्रान्तस्मरस्मेरमुखाम्बुजम् ।
उन्मीलिताङ्कुरकुचमस्फुटाङ्गकसन्धिकम् ॥५७०॥

सुरतम्प्रतिसोत्साहम्प्रथमं यौवनम्मतम् ।
स्तनौ पीनौ तनुर्मध्यः पाणिपादस्य रक्तिमा ॥५७१॥

ऊरुकरिकराकारा स्तन कंत्यक्तसंधिकम् ।
नितम्बो विपुलो नाभी गम्भीरा जघनङ्घनम् ॥५७२॥

व्यक्तरोमावली स्नैग्ध्यमङ्गके शरदादिषु ।
जीवितम्मन्मथस्योक्तं द्वितीयं यौवनम्मतम् ॥५७३॥

उन्मादकं श्रिया युक्तं (जुष्टं) सम्पन्नरतिनैपुणम् ।
कामशिक्षितभावञ्च तृतीयं यौवनं विदुः ॥५७४॥

## पात्रगुणाः

रेखासौष्ठवसम्पत्तिश्चन्द्रपद्मास्यता तथा ।
विशालनेत्रता बिम्बाधरता कान्तदन्तता ॥५७५॥

सुकम्बुकण्ठता वेल्लल्लतासरलबाहुता ।
तनुमध्यतर[1]स्थूलनितम्बकरभोरुता ॥५७६॥

अत्युच्चखर्वपीनत्वराहित्यमशिरालता ।
श्यामता गौरता नर्मवाक्योदारप्रगल्भता ॥५७७॥

यत्पात्रङ्गात्रविक्षेपैः कोमलैर्विलसल्लयैः ।
सुतालैरक्षराणीव प्रोद्गिरद्गीतवाद्ययोः ॥५७८॥

---

1. सं.र. मध्योन्नति. 7/1232

गीतवाद्यध्वनिञ्चाङ्गैश्चाक्षुषत्वमिवानयत् ।
सुमनांसीव गात्राणि रसपूर्णतया दधत् ॥५७९॥
नाट्याङ्गरचनाप्रौढिस्तज्ज्ञैः पात्रगुणाःमताः ।

इति पात्रलक्षणम् ।

व्यस्तानां वा समस्तानामेषान्दोषो विपर्ययः ॥५८०॥
गुणदोषौ परीक्षेत पात्रे नृत्तस्य सिद्धये ।

इति पात्रदोषाः ।

**रेखा**

शिरोनेत्रकरादीनामङ्गानां मेलने सति ॥५८१॥
कायस्थितिर्मनोहारी सा रेखा परिकीर्तिता ।

**लास्याङ्गानि**

सर्वाङ्गलास्यवैचित्र्यं लास्याङ्गन्तदिहोच्यते ॥५८२॥

चालिश्चालिवडश्चाथ लढिः सूकमुरोङ्गणम् ।
धसकश्चाङ्गहारः स्यादोयारो विहसी मनः ॥५८३॥
लास्याङ्गानि दशैतानि देश्यान्देशीविदो विदुः ।

**चालिः**

कोमलं सविलासञ्च मधुरन्ताललास्ययुक् ॥५८४॥
नातिद्रुतन्नातिमन्द्रन्त्र्यस्रताप्रचुरन्तथा ।
पादोरुकटिबाहूनां यौगपद्येन चालनम् ॥५८५॥

**चालिवडः**

चालिः सा शैघ्र्यसाम्मुख्यप्राया चालिवडो भवेत् ।

**लढिः**

सुकुमारन्तिरश्चीनं विलाससरसिकञ्च यत् ॥५८६॥
युगपत्कटिबाहूनाञ्चालनं सा लढिर्मतः ।

सूकम्

कर्णयोर्हावबहुलं लसल्लीलावतंसयोः ॥५८७॥

विलम्बेनाऽविलम्बेन सूकन्तल्लयचालनम् ।

उरोङ्गणम्

विलम्बेनाऽविलम्बेन कुचयोर्भुजशीर्षयोः ॥५८८॥

ललितञ्चालनन्तिर्यक् तज्ज्ञाः प्राहुरुरोङ्गणम् ।

धसक :

धसकः स्यात्सुललितं स्तनाधोनमनं[1] लयात् ॥५८९॥

अङ्गहार :

सताललितोपेता क्रमात्कायार्धयोर्नतिः ।

धनुर्वदङ्गहारः स्याद्भरतेनेति कीर्तितम् ॥५९०॥

ओयारक :

किञ्चित्तिर्यगधो मूर्घ्नो गतिरोरायको मतः ।

विहसी

स्मितं स्याद्विहसी यस्तु शृङ्गाररसनिर्भरः ॥५९१॥

अभ्यस्तादन्य एवातिसूक्ष्मप्रत्यग्रभङ्गिभाक् ।

मन :

गीतादेरागतः स्थायस्तल्लयात्तन्मनो मतम् ॥५९२॥

इति लास्याङ्गानि ।

कटिजानुसमा यत्र कूर्परांसशिरः समम् ।

उरः समुन्नतं सन्नं गात्रं तत्सौष्ठवम्भवेत् ॥५९३॥

सन्नं स्वस्थाननिष्क्रान्तन्निषण्णत्वं वलं स्थितिः ।

इति सौष्ठवम् ।

---

1. L. धचालनं

पात्रन्नृत्यविदार्यन्ते चित्रार्पितमिवं न्यसेत् ॥५९४॥
तालवाद्यसमायोगे यत्तच्चित्रकलासकम् ।

इति चित्रकलासकम् ।

**मुद्रा**

देहः स्वाभाविको मन्दो हिङ्तः शोभा विशेषतः ॥५९५॥
सम्प्रदायानुसरणे मुद्रा हृदयरञ्जिनी ।
मट्टोत्र[1] तलसम्बुध्याद्धिडितः काललीनता ॥५९६॥

इति मुद्रा ।

**प्रमाणम्**

प्रमाणङ्गीतवाद्याभ्यां नृत्यस्य समता भवेत् ।
किन्तूक्तहस्तकक्षेत्रनियमेन समं यथा ॥५९७॥

**सभासदा :**

शब्दच्छन्दोविधानज्ञाः नानाशास्त्रविशारदाः ।
त्रुटिताऽत्रुटिताभिज्ञास्तौर्यत्रितयकोविदाः ॥५९८॥

असद्वादनिषेद्धारः सदसत्कर्मवेदिनः ।
पक्षपातविहीनाश्च वाग्मिनो मत्सरच्छिदः ॥५९९॥

देशकालविचारज्ञा नानाभाषाविचक्षणाः ।
अमन्दरसनिष्यन्दिहृदयाः नम्रकन्धराः ॥६००॥
वादरेखाविशेषज्ञाः दक्षास्ते स्युः सभासदाः ।

**प्रतिवादिनौ**

गुणाङ्गलक्षणम्मुख्यं व्यङ्गवाक्येन नम्रता ॥६०१॥

नाट्याङ्गाङ्गविधिज्ञानन्तथा शास्त्रानुवर्तनम् ।
वृन्दानुगतिकौटिल्यन्नूतनप्रतिभापटुः ॥६०२॥

---

1. L मट्टोत्र तलसम्बुः स्याः Z मन्द्रोत्र तलसम्बुधा

प्रतिपक्षिकलाधिक्ये समप्रतिनिधिस्तथा ।
इति सप्त कलावादे ज्ञायतां वादिनोर्द्वयोः ॥६०३॥

समानगुणिनौ यौ कौ तौ मिथः प्रतिवादिनौ ।
यस्याधिका त्रिरेखा स्यात् स तत्र विजयी भवेत् ॥६०४॥

इति प्रतिवादिनौ ।

**सभापतिः**

शृङ्गारी भूरिदः श्रीमान् प्रियः वाक्कीर्तिलोलुपः ।
मेधावी परचित्तज्ञस्तौर्यत्रिकविशारदः ॥६०४॥

समस्तशास्त्रविज्ञानसम्पन्नो धारणान्वितः ।
गम्भीरभावः कुशलो देशीमार्गविभागवित् ॥६०६॥

सत्यवादी कृपासिन्धुर्हीनाधिकविचारवित् ।
निर्मत्सरः कुलीनश्च स्वाधीनपरिवारकः ॥६०७॥
सुधर्मी पापभीरुश्च विद्वद्बन्धुः सभापतिः ।

इति सभापतिः ।

**सभासन्निवेशः**

तत्र सिंहासनं रम्यमध्यासीनः सभापतिः ॥६०८॥

तस्य दक्षिणभागे तु सन्मन्त्री तस्य पृष्ठतः ।
कोशः श्रीकरणेशश्च विद्वांसः कवयस्तथा ॥६०९॥

नृपतेर्वामभागे तु मन्त्रिणां परिमण्डलम् ।
भूपतेः पृष्ठभागे तु दक्षिणे परिचारिकाः ॥६१०॥

चारुचामरधारिण्यो रूपयौवनसम्भृताः ।
स्वकङ्कणझणत्कारनिर्वाणजनमानसाः ॥६११॥

अग्रतो वामभागे तु प्रौढवाग्गेयकारकाः ।
नृपतेरग्रतः सव्ये विद्यावन्तः प्रियंवदाः ॥६१२॥

वैद्यज्योतिर्विदो वंदिजनास्तमेकदेशतः ।
सन्निवेश्य सभामेवं नेता सङ्गीतमीक्षते ॥६१३॥

इति सभासन्निवेशः ।

**बृन्दभेदाः**

अष्टौ च गायकवराश्चत्वारस्तालधारिणः ।
मृदङ्गिणोऽपि चत्वारो वांशिकानां चतुष्टयम् ॥६१४॥

मुखरीमेलभसमं ? यत्र बृन्दं तदुत्तमम् ।
तदर्धं मध्यमकं स्यात्तदर्धमधमं स्मृतम् ॥६१५॥

मुख्यानुवृत्तिर्मिलनं लयतालानुवर्तनम् ।
मिथस्त्रुटितनिर्वाहस्त्रिस्थानव्याप्तिरञ्जता (शक्तिता) ॥६१६॥

अवधानं चेति गुणैः प्रोक्ता बृन्दस्य षड्गुणाः ।
क्रमाद्गानञ्च वाद्यञ्च नर्तनन्त्रिविधाश्रयम् ॥६१७॥

आलातचक्रप्रतिमं कर्तव्यं च प्रयोक्तृभिः ।

इति बृन्दम् ।

अत्र किञ्चित् प्रवक्ष्यामि...... (सुषिरं?) वंशलक्षणम् ॥६१८॥

वैणवः खादिरो दान्तश्चान्दनो रात्तचन्दनः ।
आयसः...... (कांस्यजो रौप्यो वंशः)[1] स्यात्काञ्चनोऽथवा ॥६१९॥

वर्तुलः सरलःश्लक्ष्णो ग्रन्थिभेदव्रणोज्झितः ।
.......(कनिष्ठाङ्गुलिविस्तारं)[2] गर्भे च सुषिरं दधत् ॥६२०॥

स्वदैर्ध्यमानदैर्घ्यञ्च समाकृतिःसमन्ततः ।
तस्य द्वे त्रीणि चत्वारि चाङ्गुलानि शिरःस्थलात् ॥६२१॥

---

1. सं.र. 6/424-5,
2. सं.र. 6/425-6

त्यक्त्वा फूत्कारसुषिरं कार्यमङ्गुलसम्मितम् ।
[1]मुखरन्ध्रान्तरं रन्ध्रं षडङ्गुलान्तरं भवेत् (?)[1] ॥६२२॥

अर्धाङ्गुलान्तराणिस्यू रन्ध्राण्यन्यानि सप्त च ।
तान्यष्टौ बदरीबीजसंकाशानि प्रचक्षते ॥६२३॥

वंशेऽधः सर्वरन्ध्रेभ्यः परिशेष्याङ्गुलद्वयम् ।
तेषु स्वरविभागाय सप्तरन्ध्राणि मन्वते ॥६२४॥

नादहेतोर्मारुतस्य निर्गमायाष्टमं मतम् ।
फूत्कारप्रभवो वायुः पूर्यते मुखरन्ध्रतः ॥६२५॥

वंशस्थैर्नवभिः रन्ध्रैः षाण्मुखाख्यो[2] निगद्यते ।
वंशस्य मुखरन्ध्रस्य नाद[3]रन्ध्रस्य चान्तरे ॥६२६॥

एकैकाङ्गुलवृद्धिः स्यादन्येष्टौ च षडाङ्गुलात् ।[4]
चतुर्विंशाङ्गुलाद्वंशादेतदङ्गुलवर्द्धनम् ॥६२७॥

मुनिः सप्ताङ्गुलो वंश एवमन्यांश्च वर्धयेत् ।
वसुरष्टाङ्गुलः प्रोक्तो नागेन्द्र[6] स्तु नवाङ्गुलः ॥६२८॥

दशाङ्गुलो महानन्दो रुद्रस्त्वेकादशाङ्गुलः ।
द्वादशाङ्गुल आदित्यो मनुर्वंशश्चतुर्दशः ॥६२९॥

मुरल्याख्योऽपरैर्वंशो विंशत्यङ्गुलकः श्रितः ।
अर्धेन्दुनागफणवद्वंशे स्थाप्यङ्करद्वयम् ॥६३०॥

---

1-1. सं.र. मुखरन्ध्रात्तारन्ध्रं भवेदेकाङ्गुलान्तरम् ।
2. सं.र. 'रेकबीरो' 6/431
3. सं.र. 'ताररन्ध्रस्य' 6/432
4. 'वृद्धया स्युरन्ये वंशाश्चतुर्दश' सं.र. 6/432
5. सं. र. अष्टादशाङ्गुलाद्० (6/433)
6. V नाथेन्द्र

वामस्यानामिकाङ्गुल्या षड्जो मध्यमया पुनः ।
ऋषभः स्यात्प्रदेशिन्या गान्धार इति वामतः ॥६३१॥

त्रयः स्वराः प्रजायन्ते चत्वारो दक्षिणात्करात् ।
कनिष्ठया मध्यमः स्यात् पञ्चमोऽनामया स्वरः ॥६३२॥

धैवतः स्यान्मध्यमया प्रदेशिन्या निषादवान् ।
स्थानत्रयस्य निष्पतिर्नैवास्मिन्नन्यथा जगुः ॥६३३॥

सुशिक्षितेन रचितात्फूत्कारान्मध्यसप्तके ।
जायन्ते वैणशारीरस्वरसंवादिनः स्वराः ॥६३४॥

तारस्था मुखसंयोगसंकटे मुखरन्ध्रके ।
तं वादनप्रकारं च टीपामाचक्षते जनाः ॥६३५॥

तया यद्वाद्यते रन्ध्रे तत्स्वरो द्विगुणो भवेत् ।
रन्ध्रस्य मुखसंयोगविप्रकर्षात्तु मन्द्रगाः ॥६३६॥

तीव्रातीव्रतया वायोः शीघ्रमन्थरभावतः ।
पूरणापूरणाभ्यां चोपचयापचयाद् ध्वनेः ॥६३७॥

कुर्वन्त्येकत्र रन्ध्रेऽपि तज्ज्ञा नानास्वरोदयम् ।
कम्पिता वलिता मुक्ताऽर्धमुक्ता च निपीडिता ॥६३८॥
इति वांशे गतिः प्रोक्ता पञ्चधा पूर्वसूरिभिः ।

**कम्पिता**

अधरस्थस्य [वंशस्य] कम्पनात् कम्पिता मता ॥६३९॥

**वलिता**

भवेत्सञ्चारिनिष्पतौ वलिताऽङ्गुलिचालनम् ।

**मुक्ता**

रन्ध्रेऽखिलेऽङ्गुलीमुक्ते मुक्ता स्यान्मुक्तशब्दकृत् ॥६४०॥

**अर्धमुक्ता**

अर्धमुक्ताऽर्धमुक्तेः स्याद् धृतशब्दविधायिनी ।

### निपीडिता

समन्तात् सर्वरन्ध्राणि पिधायाऽङ्गुलिभिर्यदा ।।६४१।।

वंशम्पूरयते तज्ज्ञैस्तदा ज्ञेया निपीडिता ।
वंशवीणाशरीराणि त्रयोऽमी स्वरहेतवः ।।६४२।।

ललितो मधुरः स्निग्धस्तेषु वंशः प्रशस्यते ।
वंशवीणाशरीराणामेकीभावेन यो ध्वनिः ।।६४३।।
तत्र रक्तिविशेषस्य प्रमाणं विबुधा विदुः ।

### वीणा

रागचन्द्रोदये ग्रन्थे वीणाव्यक्तिर्मया कृता ।।६४४।।

वीणाज्ञानं ज्ञातुकामास्तत्र पश्यन्तु सज्जनाः ।

### द्वादश फुत्कारगुणाः

स्निग्धता बनता रक्तिर्व्यक्तिः प्रचुरता ध्वनेः ।।६४५।।

लालित्यङ्कोमलत्वञ्च नादानुरणनन्तथा ।
त्रिस्थानत्वं श्रावकत्वम्माधुर्यं सावधानता ।।६४६।।

द्वादशेति गुणाः प्रोक्ताः शब्दफूत्कारयोरिति ।
तत्र शब्दगुणेष्वेवैकादश प्रोक्तलक्षणाः ।।६४७।।

### फुत्कारदोषाः

कम्पितस्तुम्बकी काकी सन्दष्टश्चाव्यवस्थितः ।।६४८।।

पञ्चेति फूत्कृतेर्दोषानपरानूचिरे परे ।[1]
यः कफोपहताद्वक्त्राद् विस्वरः स्फुरितो भवेत् ।।६४९।।

कम्पितोऽसौ तुम्बध्वानप्रायः प्रोक्तस्तु तुम्बकी ।
तारन्यूनतया काकस्वरः काकीति कथ्यते ।।६५०।।

---

1. सं० रत्नाकरे तु यमलस्तोक-कृश-स्खलिस्तांश्च चत्वारि दोषानुक्त्वा मतान्तरेण 'कम्पितादीन् पञ्चदोषान् केचिदाहु' रित्युक्तम् । न.नि. 'फूत्कारो यमल ...... प्रतिफूत्कृतिमिति' पाठस्याभावः ।

अल्पः सन्दष्टवद्भाति योऽसौ सन्दष्ट उच्यते ।
ऊनाऽधिको वा रूक्षोयः कथ्यते सोऽव्यवस्थितः ॥६५१॥

इति फूत्कारः ।

**वांशिकगुणा दोषाश्च**

अङ्गुलीसारणाभ्यासः सुस्थानत्वं सुरागता ।
सुरागव्यक्तिर्माधुर्यान्विता वेगाद् गतागते ॥६५२॥

गीतवादनदक्षत्वं गातॄणां स्थानदायिता ।[1]
तद्दोषाच्छादनं मार्गदेशीरागेषु कौशलम् ॥६५३॥

स्वस्थानवदपस्थाने रागोद्भूतिप्रगल्भता ।
वांशिकस्य गुणाश्चैते तद्दोषाश्चापि कथ्यते ॥६५४॥

मिथ्याप्रयोगबाहुल्यमेतद्गुणविपर्ययः ।
इष्टस्थानानवाप्तिश्च शिरसः कम्पनन्तथा ॥६५५॥
वांशिकस्येति दोषाः स्युर्वर्जनीयाः प्रयत्नतः ।

इति वंशः ।

**शुद्धपद्धतिः**

सङ्गीतज्ञैर्बुधैः सार्द्धं नायके प्रेक्षके स्थिते ॥६५६॥

प्रविश्य रङ्गभूमिन्ते तिष्ठन्तः साम्प्रदायिकाः ।
वाद्यानान्नादसाम्यञ्च कृत्वाऽवहित[2]मानसाः ॥६५७॥

मेलापकं वादयेयुः प्रबन्धङ्गजरन्ततः ।
तुडुकस्या[3]न्ततश्चान्तर्ध्वनौ दूरीकृते सति ॥६५८॥

नर्तको नर्तकी वाऽपि दिक्पालांश्च विधिं विभुम् ।
मातृकामुनिनागांश्च यक्षगन्धर्वकिन्नरान् ॥६५९॥

---

1. सं.र. 'तान' 6/664
2. सं. र. 'स्थित' 7/1261
3. नृ.सं. 'कुडुकस्यां'

गणेशम्भरतन्तण्डुं लक्ष्मीं वाणीमुमामुखाम् ।
ज्येष्ठान्वयो [1]गुणैर्विष्णुन्नत्वा तद्रङ्गमाविशेत् ।।६६०।।

नृत्तमण्डपमध्यात्तु मङ्गलाकृतिमानतः ।
सप्तसप्तकराक्रान्तस्थानन्तद्रङ्गमुच्यते ।।६६१।।

इति रङ्गप्रवेशः ।

### द्विधा नृत्तम्

कार्यन्तत्र द्विधा नृत्तं बन्धक'ञ्चा'निबन्धकम्' ।
गत्यादिनियमैर्युक्तम्'बन्धक'न्नृत्तमुच्यते ।।६६२।।

'अनिबन्ध'न्त्वनियमादथोद्देशक्रमो यथा ।
मुखचालिरथोपाणि ध्रुवाडः[2] विडुलागवः ।।६६३।।

ततः परं शब्दचालिर्नानाशब्दप्रबन्धकाः ।
स्वरमण्डादयो गीतप्रबन्धाश्चिन्दुजातयः ।।६६४।।

धरूणाञ्जातयः पश्चात्कति ध्रुवपदानि च ।
इत्युद्दिष्टम्'बन्धक'स्य लक्षणन्त्वधुनोच्यते ।।६६५।।

### बन्धकभेदानां लक्षणानि

मुखन्तु पूर्वरङ्गः स्याच्चालिस्तदनुगा गतिः ।
मुखचालिरिति प्रोक्ता नृत्तज्ञैः पूर्वसूरिभिः ।।६६६।।

चन्द्रत्रिनेत्रवाराष्टवेदाङ्गशरदिक्षु च ।
स्वसव्यक्रमतो नृत्वा मध्ये पुष्पाञ्जलिं क्षिपेत् ।।६६७।।

अग्रतः क्षेपणाद्राजा पीड्यते दक्षिणे सभा ।
पृष्ठे गुरुः स्वयं वामे रङ्गपीठान्तरे क्षिपेत् ।।६६८।।

---

1. नृ. सं. ज्येष्ठाश्च ये
2. नृ. सं. श्चोरुपाणि 2 (15), नाट्यदर्पणे मृगीगति
3. नृ. सं. ध्रुवाडा 2 (15)

रङ्गपीठस्य मध्ये तु ब्रह्मा स्वयमधिष्ठितः ।
इष्टार्थङ्क्रियते पुष्पमोक्षणं रङ्गमध्यतः ॥६६९॥

यतः पादस्ततो हस्तो यतो हस्तस्ततस्त्रिकम् ।
पादस्य निर्गमं ज्ञात्वा शेषाङ्गादीनि योजयेत्[1] ॥६७०॥

इतस्ततोऽर्थपर्याय इङ्गने अङ्गने इति ।
रञ्जकाय वदेत्तत्र यथा താललयोचितम् ॥६७१॥

आविद्धवक्त्रहस्ताभ्याञ्चार्या च समपादया ।
पुरतस्त्रिपदीङ्गच्छेन्नटवर्यो विलासतः ॥६७२॥

ततश्चन्द्रेनीनकञ्च कृत्वा समनखन्ततः ।
सविलासम्मन्दमन्दन्तिर्यक् चालनसुन्दरम् ॥६७३॥

पार्श्वद्वन्द्वं सुलूनामा चालयेत्तु मुहुर्मुहुः ।
मन्दानिलचलद्दीपशिखेवाङ्गस्य चालनम् ॥६७४॥

अथवाऽहिफणाकारां 'सुलू'माहुर्मनीषिणः ।
व्यावर्त्तितौ लताहस्तौ युगपत् क्रमतो हृदि[2] ॥६७५॥

भवेद् द्विशिखरत्वञ्च पादौ संयुक्तकुञ्चितौ ।
गात्रन्तदनुसारेण नीचन्नीचं व्रजेत्तदा ॥६७६॥

तलसञ्चमनुप्राप्य सूलूवर्तनमाचरेत् ।
भूमेरूर्ध्वंस्थितिः कट्यास्तालद्वित्रिचतुष्टयात् ॥६७७॥

तलमध्योर्ध्वसञ्चाख्याः क्रमेण कथिता बुधैः ।
अङ्गुष्ठमध्यमाङ्गुल्यौ ये हस्तस्य प्रसारिते ॥६७८॥

तदग्रयोरन्तरालन्तालमाहुर्मनीषिणः ।
रागालापानुगां व्यक्तशब्दालापानुसारिणीम् ॥६७९॥

---

1. नृ. सं. शेषाङ्गानि नियोजयेत् 9 (30)
2. नृ. सं. क्रमतो यदि 14 (40)

गतिञ्च सर्वदा कुर्यात् सभाजनमनोहराम् ।
चार्या सार्य्या[1] सव्यसूची पादोऽग्रतलसञ्चरः ॥६८०॥

अधस्तलपताकश्च बाहुस्तत्र प्रसारितः ।
शिरोट्टक्कर[2]पादानां युगपद्रेचकन्नयेत्[3] ॥६८१॥

ततस्तु मध्यसञ्चेन सोत्संद्या करिहस्ततः ।
दक्षिणश्चरणस्तस्मान्निष्क्रम्य स्वस्तिकं भजेत् ॥६८२॥

सूलूचालनकन्तत्र तथा नूपुरविद्धिकाम् ।
ततस्तु तलसञ्चेन चतुरस्रं समाश्रयेत् ॥६८३॥

चतुरस्रौ करौ तत्र सूलून्तत्राऽपि चालयेत् ।
ततस्तलमुखाभ्यां च चार्या स्वस्तिकया तथा ॥६८४॥

तृतीयान्दिशमासाद्य तूर्ध्वं[4]सञ्चेन सव्यतः ।
समां कृत्वा समनखम्पूर्ववच्चाङ्गचालनम् ॥६८५॥

वैशाखरेचिकन्तत्र बाहू तिर्यक् प्रसारितौ ।
ततः कुलीरिका चार्या द्वितीयं स्थानमाचरेत् ॥५८६॥

मण्डलं स्थानकन्तत्र सूलूवर्तनकन्तथा ।
करिहस्तकया चार्या सव्यहंस्तिकरेण च ॥६८७॥

उद्वेष्टितेन वामेन रङ्गमध्यं समाश्रयेत् ।
सभा सम्मुखतो हस्तौ तौ च तत्क्रियया युतौ[5] ॥६८८॥

पार्श्वरेचिकन्तत्र जानुकुञ्चितकन्तथा ।
मण्डलस्थानकं कृत्वा लताहस्तौ सुलून्तथा ॥६८९॥

---

1. L प्यथ
2. L तक्कर
3. नृ सं. नं वदेत्
4. नृ सं. तूद्ध 22/60
5. नृ सं पुटौ 26/65

वामो यथास्थितः कार्यो दक्षिणस्तु लताकरः ।
ऊर्ध्वोर्ध्वाङ्गस्तथा तत्र तदूर्ध्वं[1] सारयेत्करः ॥६६०॥

ततस्तलमुखाभ्याञ्च चार्या स्वस्तिकया तथा ।
सप्तमीं दिशमासाद्य सभां कुर्यात्तु वामतः ॥६६१॥

द्वितीयायान्तृतीयायां रङ्गमध्ये च यत्क्रमम् ।
तत्क्रमं नृत्ततत्त्वज्ञश्चार्वाद्यङ्गविशेषतः ॥६६२॥

यथाक्रमेण (सप्तम्यामष्टम्यां)[2] रङ्गमध्यतः ।
नृत्वा चाविद्धवक्त्राभ्यां चार्या चैव मरालया ॥६६३॥

चतुर्थीं दिशमासाद्य तत्र स्थानञ्च मण्डलम् ।
जनितं करणं तत्र सुलूञ्चापि प्रचालयेत् ॥६६४॥

दक्षिणः खटकः कर्णे वामो मुष्टिः स्वपार्श्वतः ।
धनुःकर्षं स्थितावर्त्तं धार्यो(चार्या) [3]तिर्यङ्मुखाख्यया ॥६६५॥

षष्ठीन्दिशं समागत्य प्रत्यालीढाङ्गचालनम् ।
तत्रैव चतुरस्रञ्च विप्रकीर्णं सुलून्तथा ॥६६६॥

ततोऽर्धरेचिताभ्याञ्च चार्या तिर्यङ्मुखाख्यया ।
पञ्चमीन्दिशमासाद्य सूलूं समनखन्नयेत् ॥६६७॥

शुद्धचालिञ्च तत्रैव कुकुद्रे[4] मिति पाटतः ।
ततोऽञ्जलिकरङ्कृत्वा शिरोवदनहृत्क्रमात् ॥६६८॥

देवङ्गुरुं ऋषिन्नत्वा चार्याकातरया तथा ।
रङ्गमध्यमनुप्राप्य चार्याऽध्यर्धिकया समम् ॥६६९॥

---

1. नृ.सं. तदूर्ध्वं 26(70)
2. नृ.सं. 30(75)
3. नृ सं. 32(80)
4. नृ सं. कौक्कुटिमीति 35(85)
5. नृ.सं. समे 36(10)

तलपुष्पपुटङ्कृत्वा पुष्पाण्यत्र प्रपूर्य च ।[1]
सव्यापसव्यतः पश्चादङ्गादूर्ध्वात्[2] क्रमादिति ॥७००॥

पुष्पाञ्जलिन्दर्शयित्वा रङ्गपीठान्तरे क्षिपेत् ।
तत्रैवाभिनयेन्नान्दीश्लोकन्तद्रागयोजितम् ॥७०१॥

यथा–

भवताम्भूतये भूयाद् भवानी भववल्लभा ।
अङ्गीकृतसुसङ्गीतभङ्गी[3] मुदितमानसा ॥७०२॥

भवतां-पुरोदेशगतेन पताकेन, भूतये-पुरोदे[4] शोद्ध्वोंत्थिताभ्यामलपल्लवाभ्याम्भूयात्-उद्वेष्टितऽधोमुखगतेन पताकेन, भवानी-वामवक्षोरुहतटगतस्वसम्मुखगोमुखेन, भवललाटगतसूच्यास्येन। वल्लभाहृदयगतचतुरेण। अङ्गीकृतमुखस्थ[5]-कपोतेन। सुसङ्गीतमुखदेशगतेन हंसास्येन। भङ्गी[6] कम्पितपुरोदेशगतेन त्रिपताकेन। मुदितपुरोधस्तादूर्ध्वोत्थितेन वामेनालपल्लवेन । मनसा-हृदयगतेन व्यावर्त्तित-परिवर्त्तितदक्षिणसन्दंशेन ।

ततस्तत्रैव शीघ्रेण पार्श्वयोरग्रतः क्रमात् ।
कमलवर्त्तनिकामादौ मकरवर्त्तनिकान्ततः ॥७०३॥

मायूरीम्मानवी मैनीं ?[7] हयलीलाम्मृगीन्ततः ।
हंसीञ्च कुक्कुटी[8]-म्पाश्चात् खञ्जनीङ्गजगामिनीम् ॥७०४॥

1. नृ.सं. पुष्पाण्यापूर्य तत्र च
2. नृ.सं. पश्चादग्रादूर्ध्वात् 36(90)
3. नृ.सं. भृङ्गी 39(95)
4. L दि०
5. V स्थेन
6. नृ.सं. भृङ्गी 100 (4)
7. मैनीमिति नृ.सं. 8 कुक्कुटी, नृ. सं 49 (5)

दर्शयेच्च (युः) क्रमात्तज्ज्ञाः सम्प्रदायानुसारतः ।
पताकौ मणिबन्धस्थौ शिथिलौ स्वस्तिकौ पुनः ॥७०५॥

मण्डलभ्रमितौ श्लिष्टौ ख्यातौ कमलवर्तनौ ।
यदा तु मकरो हस्तः पुरस्तात्पार्श्वयोरपि ॥७०६॥

व्यावर्तनाद् बहिश्चान्तस्तदा मकरवर्तना ।
बर्हिबर्हकलाकारौ करौ कृत्वोर्ध्वतः क्रमात् ॥७०७॥

शनैरुच्चालितौ पादौ मायूरीस्फुरणान्ततः ।
भानोर्गतिरिवालक्ष्ये हस्ताभ्यां मण्डलाकृतिः ॥७०८॥

सव्यापसव्ययोरूर्ध्वक्रियया 'मानवी'गतिः ।
ह्रदान्तःस्थितपाठीनो यथा वसति वीचिषु ॥७०९॥

पार्श्वयोरुभयोस्तद्वत् क्रियया 'मैनवी'गतिः ।
पादपार्श्वयुगे स्थित्वा धरण्यां सञ्चरेद्द्रुतम् ॥७१०॥

मध्ये च स्थीयते तत्र गतिरुक्ता 'तु[1]-रङ्गिणी' ।
चकिताक्षी कुरङ्गी च पश्यन्ती गीतपद्धतिम् ॥७११॥

आकर्णयन्ती यदि सा 'हरिणी'गतिरीरिता ।
मारालीं च पुरस्कृत्य[2] भावहावादिपूर्वकम् ॥७१२॥

मन्मथोद्दीपनाद्दृष्टिः कथिता 'हंसिनीगतिः' ।
युगपत्स्फुरणात् पक्षपादयोः साचिमण्डलम् ॥७१३॥

मत्तकुक्कुटवद् यत्र 'कौक्कुटी'गतिरीरिता ।
त्रिपताकौ करौ कृत्वा जानू संकुञ्च्य शीघ्रतः ॥७१४॥

पादाग्रतश्चरित्वा तु स्थीयते 'खञ्जनीगतिः' ।
समपादेन च स्थित्वा मन्दं मन्दं चरेत्ततः ॥७१५॥

---

1. नृ.सं. 'नु' 47/16
2. नृ.सं. 'कृत्वा' 49/21

गम्भीरश्चाङ्गदृष्टिश्चेद् 'गजलीलागति'र्मता ।
गतीनां सानुकूलत्वं भजेयुश्चरणादयः ।।७१६।।

ततोऽग्रे सव्यहस्ताङ्घ्री युगपत् क्रियया क्रमात् ।
वैष्णवञ्च हयक्रान्तम्प्रत्यालीढञ्च मोक्षणम् ।।७१७।।

कुर्यात्तदा वामहस्तशिखरो हृदि संस्थितः ।
पताकोऽधस्तलश्चान्यः स्वपार्श्वे च प्रसारितः ।।७१८।।
चित्रकलासकन्तत्र मोक्षे सम्यक् प्रयोजनम् ।

इति मुखचालिः ।

अथ उरुपाणिः[1] (उडुपानि)

नियत (यति) ताललयस्थानचारीहस्तात्मकन्तु यत् ।।७१९।।
तन्नृत्त'मुरु (डु) पम्प्रोक्तम्बुधैर्द्वादशधोदितम् ।
'नेरिः' 'करणनेरि'श्च 'भित्रं' 'चित्रं' च 'नत्रकम्' ।।७२०।।

अदृष्टपृष्ठतुल्लुलीञ्च 'तालरूपं'[2] च 'सीलुकम्' ।
तुर्ल्लञ्च प्रसरञ्चैव कर्त्तरी होलुनामकम् ।।७२१।।

द्वादशेति समाख्याता, अथ लक्षणमुच्यते ।
चतुरस्रे स्थितिर्यत्र रासतालश्चिरो लयः ।।७२२।।

रथचक्रैकपादेन परेण च यथोचितम् ।
गतिः पताकहस्तश्च प्रत्याशन्तलसञ्चतः ।।७२३।।

नीवीवद्गतिसञ्चारः क्रमात् सव्यापसव्ययोः ।
रेखासौष्ठवसम्पन्नः स 'शुद्धो नेरि'रुच्यते ।।७२४।।

उडुपेष्वपि सर्वेषु विना दृष्टकपृष्ठकम् ।
वाह्यभ्रमरिकां बद्ध्वा मुक्तिः स्याच्चतुरस्रके ।।७२५।।
छत्रभ्रमरिका किन्तु भवेत्करणनेरितः ।

इति नेरिः ।

---

1. ZI द्वादश-उडुपानि
2. नृ.सं. 'तोल' 2(40)

छत्रभ्रमरिका किन्तु भवेत् करणनेरितः ।

इति नेरिः ।

झम्पातालः सगोपुच्छो हस्तकोऽप्य[1]-पल्लवः ॥७२६॥

पार्श्वोर्ध्वं जानुनी दण्डपक्षं तलविलासितम् ।
विद्युद्भ्रान्तन्ततश्चन्द्रावर्त्तनामनिशुम्भितम् ॥७२७॥

ललाटतिलकम्पश्चाल्लतावृश्चिकसंज्ञकम् ।
नवभिः करणैरेभिः क्रमात् सव्यापसव्यतः ॥७२८॥

कृत्वाऽलीढे स्थितिर्यत्र 'नेरिः करणपूर्वकः' ।

इति करणनेरिः ।

यत्राऽनेकस्थितिः क्रीडा गोपुच्छाद्यन्ततः समा ॥७२९॥

स बालमकरा लास्यश्चारी[2] नूपुरपादिका ।
त्रिसञ्चसौष्ठवं रेखा प्रत्याशं भित्रमुच्यते ॥७३०॥

इति भित्रम् ।

तिर्यङ्मुखा प्रधानेन मध्ये काचिद्यथोचिता ।
गतिः स बालमकरस्त्रिपताकः ससौष्ठवम् ॥७३१॥

त्रिसञ्चेन पिपील्या च मल्लिकामोदतालतः ।
शोभितं यत्र दिङ्भावैश्चित्रन्तत् स्थितिरीप्सिता ॥७३२॥

इति चित्रम् ।

मरालगतिका यत्र मध्ये गत्याऽन्ययाऽन्विता ।
समतालप्रयोगेण यतिभेदेन राजितम् ॥७३३॥

---

1. नृ.सं. 'त्य' 9 (50)
2. नृ.सं. चंद्रबर्त्तनाभनि 2(5)

विचित्रभ्रमरो बालक्रीडासाधनचक्रवत् ।
स्थितिर्यथेप्सिता तद्द्विग्रञ्जकं नत्रमुच्यते ॥७३४॥

इति नत्रम् ।

करिहस्त(स्ता)-गतिर्यत्र काचिन्मध्ये यथेप्सिता ।
रच्चातालस्सुयतिमान् मध्यमानेऽनवस्थितिः[1] ॥७३५॥
विचित्रचतुरो हस्तो दिक्षु सज्जनमोहनम् ।
अदृष्टपृष्ठपूर्वन्तत् तुल्लुं[2] सद्भिर्निगद्यते ॥७३६॥

इत्यदृष्टपृष्ठतुल्लुंम् ।

कांश्चित्तालानुपक्रम्य प्रयोगे बहुलद्रुतम् ।
सङ्कीर्णनिकगतिभिः प्रवृत्तं सुमनोहरम् ॥७३७॥
कु(धु?)वाडाख्यञ्च तज्ज्ञेयन्तालरूपं विचक्षणैः ।

पञ्चधा कु(धु?)-वाडाख्यं यथा—

हस्तबाह्वङ्घ्रिभिः सव्यैर्वामयद्बाहुहस्तकैः ॥७३८॥
षड्भिरङ्गैश्चतुर्भिर्वा तालैस्तत्तन्मिताऽङ्ककैः[3] ।
समानमात्रलान्तैश्च द्रुतलघ्वादिदौ(दो)[4]र्यदि ॥७३९॥
पूर्वं पूर्वं परित्यज्य त्वग्रिमाग्रिममाश्रितैः ।
एकद्वाव[5]न्यतालेन नृत्तं कुर्यान्नटाग्रणी ॥७४०॥
चक्रबन्धन्तदाख्यातन्नृत्तविद्याविशारदैः ।

इति चक्रबन्धम् (i) ।

---

1. नृ.सं. नव स्थिनिः 9/75
2. नृ सं. तुल्लं 2(75),
3. नृ.सं. तो ५(85)
4. नृ.सं. वै० 2/85
5. नृ.सं. एकदाव 3(80)

तालानां तुल्यमात्राणां षण्णां दलधुरूपिणाम् ॥७४१॥

समद्विभागलान्तानाम्प्रत्येकं द्विदलं समम् ।
कृत्वा तत्पूर्वपूर्वार्धं षट्सु स्थानेषु योजयेत् ॥७४२॥

चरमं चरमं वार्द्धं तत्तत्पूर्वा[1]-न्ततः क्रमात् ।
प्रयोजिते तदा ताला द्वादश प्रभवन्ति हि ॥७४३॥

चक्रबन्धवदन्यत्तु रविचक्रम्भवेदिति ।

इति रविचक्रम् (ii) ।

चतुर्णामिव तालानां रविचक्रोक्तलक्षणम् ॥७४४॥

चतुर्षु हस्तपादेषु पूर्वपूर्वदलन्न्यसेत् ।
तत्तत्परदलं हस्तपादयोर्मेलयेन्मिथः ॥७४५॥

सव्यापसव्ययोस्तत्र वसुताला भवन्ति हि ।
पद्मबन्धमिति ख्यातं शेषं स्याद्रविचक्रवत् ॥७४६॥

इति पद्मबन्धम् (iii) ।

चतुर्णान्तुल्यमात्राणां तालानां दलरूपिणाम् ।
समत्रिभागलान्तानाम्प्रत्येकन्तु पृथक् पृथक् ॥७४७॥

त्रिभिर्भागान्क्रमात्[2] कृत्वा कराङ्घ्रिष्व-[3]थ योजयेत् ।
स्वस्थाने च तृतीये च द्वितीये तलविण्डकान् (तालखण्डकान् ॥७४८॥

प्रतितालं क्रमान्न्यस्य नटो नृत्तं समाचरेत् ।
नागबन्धन्तदा प्रोक्तमन्यत् स्यात् पद्मबन्धवत् ॥७४९॥

इति नागबन्धम् (iv) ।

चतुर्णामिव तालानां पद्मबन्धोक्तलक्षणम् ।
स्थापयेत्पूर्वपूर्वार्धम्परार्द्धञ्चारयेन्मिथः ॥७५०॥

---

1. नृ.सं. तत्तपूर्वं
2. नृ.सं. त्रिविभागान् 2(205)
3. ibid प्यं

हस्तयोः पादयोस्तद्वद्धस्ताङ्घ्र्योरुभयोस्तथा ।
सव्यापसव्ययोर्हस्तपादयोः स्वाग्रतः क्रमात् ॥७५१॥
अन्यतालकृतन्नृत्तं वृक्षबन्धन्तदोदितम् ।

इति वृक्षबन्धतालरूपकम् (v) ।

अथ सीलुकम्

हंसपक्षकरो यत्र हंसलीलः कुलीरिका ॥७५२॥

अन्या तदङ्गिनी काचित् प्रतिदिक्सम्प्र[1]-सारणम् ।
वानरक्रीडिताकारन्तलसञ्चेन सीलुकम् ॥७५३॥

तदेव जारमानाख्यं निगदन्त्यपरे जनाः ।

इति सीलुकम् ।

अश्लिष्टाख्या गतिर्यत्र काचिदन्तर्मनोहरा ॥७५४॥

सक्षिप्रगजलीलाश्च वर्त्तना पद्मकोशयोः ।
प्रतिदिक्स्थानकं तुल्लुन्तत्क्रमं जलकीटवत् ॥७५५॥

इति तुल्लुम् ।

विलम्बितैकताली च हस्तावाविद्धवक्रकौ ।
पार्ष्णिरेचितिका चारी काचिन्मध्ये यथेप्सिता ॥७५६॥

यत्र तत्प्रसरम्प्रोक्तं स्थित्यादिकमनोहरम् ।

इति प्रसरम् ।

ऊरुवेणीगतिर्यत्र मध्येऽप्यन्या तदीप्सिता ॥७५७॥

उरोवर्त्तितकौ हस्तौ सुलयो लघुशेखरः ।
स्थितिदिग्भेदतो विद्युद्गति[2]-वत् कर्त्तरी मता ॥७५८॥

इति कर्त्तरी ।

---

1. नृ.सं. प्रतिदिक्षु प्रसारणम् 9 (15)
2. नृ.सं. P. 10

पश्चात्क्षिप्तावुरःक्षेत्राद् यत्र स्यातां लताकरौ ।
स्तम्भक्रीडनिका चारी मध्ये काचिद्यथोचिता ॥७५९॥

यतिलग्नः सुयत्याद्यः[1] प्रत्याशं गतिचित्रितम् ।
पलाशिगृध्रक्रीडावत्तद्धो[2]ल्लुमिति कीर्तितम् ॥७६०॥

इति होल्लु ।

इति द्वादश उडुपानि ।

**द्वादश ध्रुवाडानि**

आद्यन्ते भ्रमरी यत्र सुलूनां त्रितयं[3] हृदि ।
भुजङ्गत्रासिता मोक्षे तद्ध्रुवाडमितीरितम् ॥७६१॥

अन्ते सर्वध्रुवाडानामन्तर्भ्रमरिका मता ।
कलविङ्कविनोदाख्यन्तार्क्ष्ययक्ष (पक्ष-)[4]-विलासितम् ॥७६२॥

विद्युद्विलासितं वात्यावर्त्तितं रविसञ्चरम् ।
नर्तनाभरणन्तिर्यक्ताण्डवं रङ्गभूषणम् ॥७६३॥

धादीशगजभैरुण्डं रोलम्बाङ्कविलासितम् ।
पक्षिशार्दूलकं सिंहप्लुतकन्द्वादशेति च ॥७६४॥

इत्युद्दिष्ट[5]-कृतम्पूर्वं वक्ष्ये तल्लक्षणङ्क्रमात् ।
चक्रभ्रमरिनिःशङ्कौ दाटुर्होरमयी क्रमात् ॥७६५॥

यदोत्प्लुत्योक्तमोक्षश्चेत् कलविङ्कविनोदकम् ।
चक्रभ्रमरिका यत्र होर्मयीदाटुकौ मतः (ततः) ॥७६६॥

---

1. L सयत्याद्यः
2. नृ.सं. क्रीडायास्तद्धोल्लु P-10
3. L गुत्रयं
4. L तार्क्ष्यपक्ष
5. नृ.सं. इत्यूर्ध्वाधः (P 10)

निःशङ्क उक्तन्यासः स्यात्ताक्ष्यपक्षविलासितम् ।
चक्रभमरिका दाटुर्निःशङ्को होर्मयी ततः ॥७६७॥

यदा प्रागुक्तमोक्षः स्यात् तदा विद्युद्विलासिनम् ।
चक्रभ्रमरिहोर्मय्यौ ततो निःशङ्कदाटुकौ ॥७६८॥

उक्तमुक्तिः क्रमाद्यत्र वात्यावर्त्तितकञ्च तत् ।
बाह्यभ्रमरिका पश्चाद् दाटुको होर्मयी ततः ॥७६९॥

निःशङ्कश्चोक्तमोक्षोऽपि यत्र स्याद्रविसञ्चरः ।
बाह्यभ्रमरिनिःशङ्कौ होर्मयीदाटुकौ ततः ॥७७०॥

पूर्वोक्तमोक्षणं यत्र नर्त्तनाभरणञ्च तत् ।
बाह्यभ्रमरिका यत्र त्वडालुर्होर्मयी ततः ॥७७१॥

रायरङ्गालुरुक्तान्त्यस्तत् तिर्यकताण्डवे भवेत् ।
बाह्यभ्रमरिका रायरङ्गालुर्होर्मयी ततः ॥७७२॥

अडालुरुक्तमोक्षश्च यत्र तद्रङ्गभूषणम् ।
तिरपादिभ्रमर्यत्र दाटुश्चाडन्तरस्ततः ॥७७३॥

वादीशगजभैरुण्डे होर्मयी चोक्तमोक्षकः ।
तिरपाद्याभ्रमर्यत्र क्रमाद्धोर्मयिदाटुकौ ॥७७४॥

रायरङ्गालुरुक्तान्त्यो रोलम्बाङ्गविलासिते ।
तिरपभ्रमरी चादौ त्वडालुर्दाटुकौ ततः ॥७७५॥

निःशङ्क उक्तमोक्षोऽपि पक्षिशार्दूलकं हि तत् ।
तिरपभ्रमरी यत्र रायरङ्गालुदाटुकौ ॥७७६॥

होर्मयी चोक्तमुक्तिः स्यात्तदा सिंहप्लुतं हि तत् ।

इति द्वादशध्रुवाडानि ।

इत्युक्ता लगवो[1]ऽन्येऽपि सुलूपूर्वं पृथक् पृथक् ॥७७७॥
एकावृत्त्या द्विरावृत्त्या क्वचिदन्येन वा सह ।

---

1. नृ.सं. 'लागवो' P 11

**बिडुलागवः**

उत्प्लुतन्ति[1] नटा यत्र ते सर्वे बिडुलागवः ॥७७८॥

अडालू रायरङ्गालुर्निःशङ्को होर्मयी तथा ।
दाटु[2]श्चाड(न)न्तरोदिण्डू रायादिः पक्षिलालुवः[3] ॥७७९॥

अलगण्ढेङ्किकावीसुस्तथा[4] मुङ्गरणन्ततः ।
[5]-कर्त्तर्यलगपूर्वौ द्वौ दिण्डिकौ चाथ लक्षणम्-[5] ? ॥७८०॥

सुलू बद्ध्वा यदोत्प्लुत्य चरणौ पक्षिपक्षवत् ।
भ्रामयित्वा पतेद्भूमौ तदाऽडालुरितीरितः ॥७८१॥

सुलूम्बद्ध्वैकपादेन सहैवानुपतेदिव[6] ।
द्वितीयोऽपि तदा 'रायरङ्गालु'न्तद्विदो विदुः ॥७८२॥

सुलूपूर्वं यदोत्प्लुत्य मिलितौ चरणौ समौ ।
दूरम्भूमौ निपतितः[7] स निःशङ्कः प्रकीर्तितः ॥७८३॥

यत्र स्वस्तिकमावर्त्य पादः पृष्ठगतो यदा ।
लङ्घयेदङ्घ्रिणाऽन्येन प्रोक्ता सा 'होर्मयी' तदा ॥७८४॥

पुरः प्रसार्य चरणँल्लङ्घयेदपराङ्घ्रिणा ।
सुलूपूर्वन्तदा सद्भिर्दाटुरित्यभिधीयते ॥७८५॥

पुरगौ मिलितौ[8] पादौ दाटुरेवाप्यनन्तरः ।
उत्प्लुत्य चरणद्वन्द्वं वस्त्रनिःपीडनोपमम् ॥७८६॥

---

1. नृ सं. उत्प्लवेति P 11
2. Ibid डाटु
3. Ibid, सुलुवः
4. Ibid अलगंढे किकावीसुस्तर्थो
5-5. Z1: 'कार्तरीदिण्टु पूर्वश्च लगदिण्टुक इत्यपि'
6 नृ.सं. द्दिवि P 11 Ibid सं.द. द्यदि पृ. 212
7. Ibid पततः
8. Ibid पुरतोऽपिहितौ

परिभ्राम्याऽवनीं याति तदिदन्दिण्डुमुच्यते ।
व्योम्नि निःशङ्कदिण्डुभ्यां रायादिः पक्षिसालुवः ॥७८७॥

अधोमुखः समुत्प्लुत्य निपत्य पुरतो यदा ।
कुक्कुटासनमाबद्ध्य स्थिरश्चेदलगन्तदा ॥७८८॥

समौ पादौ यदान्यस्मिन् पार्श्वे त्वपरपार्श्वतः ।
उत्प्लुत्य पातयेच्चित्रन्तदा ढेङ्कीति कथ्यते ॥७८९॥

भूमावेकं समास्थाय द्वितीयम्पूर्ववद्यदा ।
पातयेच्चरणौ व्योम्नि तम्बिसम्मुनिरब्रवीत् ॥७९०॥

संहतात्पुरमुत्प्लुत्य तनुवृत्त्या पराङ्मुखः ।
महीतले यदासीनो मुङ्गरणङ्कुक्कुटासने ॥७९१॥

तमेव विपरीतेन हिङ्गणङ्केचिदूचिरे ।
होर्मयीकर्त्तरीपूर्वङ्कार्त्तरीदिण्डुमूचिरे ॥७९२॥

गगनेऽलगदिण्डुभ्यामुच्यते लगदिण्डुकः ।
इत्यादि बहवो भेदाः सन्ति ते "बिडुलागवः" ॥७९३॥
लोकवृत्त्यनुसारेण ज्ञातव्यास्ते यथोचिताः ।

इति बिडुलागवः ।

## अथ भ्रमर्यः (उत्प्लुतिकरणानि)

## (शब्दचालिः शब्दप्रबन्धकाश्च)

बाह्यान्तस्तिरिपच्छत्रचक्राद्या भ्रमरिका यथा (?) ॥७९४॥

दक्षिणेनाङ्घ्रिणा स्थित्वा वाममङ्घ्रिञ्च कुञ्चयेत् ।
वामावर्त्तम्भ्रमेद्यत्र सा बाह्यभ्रमरी मता ॥७९५॥
एतस्यास्तु विपर्यासादन्तर्भ्रमरिका भवेत् ।
तिरपभ्रमरी तिर्यग्द्वावङ्घ्री स्वस्तिकात्परम् ॥७९६॥

त्रिविक्रमाकारधारीस्थानमास्थाय यत्र तु ।
वामावर्त्तम्भ्रमेदाहुस्तां[1] छत्रभ्रमरीम्बुधाः ॥७९७॥

---
1. सं.र. वर्त्तंभ्रामाब्दाहु 7/777

चक्रभ्रमरिकाखण्डसूच्यर्द्धे चक्रवद्भ्रमात् ।
अन्याश्च काश्चिद्विज्ञेया भ्रमर्यो लोकवृत्तितः ॥७९८॥

**शब्दनृत्तम्**

तालधारिण्यभिव्यक्तन्तादिकं वर्णसञ्चयम् ।
समुच्चरन्ति षड्जादीन्मगणादिगणान्वितान् ॥७९९॥

चतुरस्रं समाधाय विधाय शिखरङ्करम् ।
नाभावेकमुरोदेशादपरम्पुरतः परम् ॥८००॥

पताकहस्तकाद्यन्यतमङ्कुर्यात्प्रयत्नतः ।
आद्यशब्दाक्षरोत्पत्तिहेतुकं सुभगन्ततः ॥८०१॥

एकपादम्पुरासूत्रीऽपरञ्चरणमञ्चितम् ।
पश्चाद्गत्याऽऽयत[1] हस्तं तत्तत्करसमं यदा ॥८०२॥

व्यावर्त्तयेत्तमेवाङ्घ्रिन्नयेत्पश्चात्तथाऽपरम् ।
गात्रमात्रस्वरानङ्गैर्भावलोचनचेष्टितैः ॥८०३॥

पादाभ्यान्दर्शयेत्तालं लयाच्छब्दाक्षराण्यलम् ।
नृत्येत्तदा 'शब्दनृत्तं' नृत्तविद्भिरुदीरितम् ॥८०४॥

**स्वराभिनयः**

यस्य गीतस्य यो रागस्तस्य यः स्याद्ग्रहस्वरः ।
षड्जादन्यतमः सोऽत्राऽभिनयो हस्तकेन तु ॥८०५॥

दक्षिणेनाऽलपद्मेन वामेन चतुरेण च ।
परिमण्डलितेनाथ मयूरललितेन च ॥८०६॥

एवं विनिर्दिशेत्षड्जं लक्ष्यलक्षणकोविदैः ।
हंसास्याभिधहस्तेन दक्षिणेनेतरेण तु ॥८०७॥

कटिस्थेनाऽर्द्धचन्द्रेण समेन शिरसा तथा ।
ब्रह्माख्यस्थानकेनाऽपि धीमानृषभमादिशेत् ॥८०८॥

---

1. नृ.सं. पश्चद्गत्याथ तं P. 13

शुकतुण्डेन हस्तेन दृष्ट्या करुणया तथा ।
अधोमुखेन शिरसा त्वश्वक्रान्ताभिधेन च ॥८०९॥

चार्याप्युचितया धीमान् 'गान्धारं' स्वरमादिशेत् ।
पताकौ स्वस्तिकौ कृत्वा शिरसा विधूतेन च ॥८१०॥

शैवाख्यस्थानकेनाऽपि कटीक्षीणेन[1] वा पुनः ।
दृष्ट्या च हास्यया धीरोऽभिनयेन् 'मध्यमस्वरः' ॥८११॥

कृत्वाऽलपल्लवौ हस्तौ धूतेन शिरसा तथा ।
एवं विनिर्दिशेद्धीमान् स्वरम्पञ्चमसंज्ञकम् ॥८१२॥

काङ्गूलहस्तकौ कृत्वा दृष्ट्या बीभत्सया तथा ।
परावृत्तेन मूर्ध्ना च प्रत्यालीढाभिधेन च ॥८१३॥

स्थानकेन विनिर्दिष्टो 'धैवतो' निपुणैर्नटैः ।
हस्तेन करिहस्तेन क(पर)-हस्तेन लीलया ॥८१४॥

दृष्ट्या विधूतशिरसा 'निषादं' सन्निरूपयेत् ।

इति स्वराभिनयः ।

इहोदित-सदिक्स्थानकरणैश्च[2] निरूपितैः ॥८१५॥

समस्तैरथवा व्यस्तैस्तत्तत्करानुरोधतः ।
यत्र तालयुजा यत्या तन्नृत्यं सुमनोहरम् ॥८१६॥

ततः शब्देन तदनूद्ग्राहेण[3] च ततः पुनः ।
शब्देन तेनकैशब्दखण्डेन ध्रुवकेन च ॥८१७॥

पुनः शब्देन तदनु यतिगीतेन नर्त्तनम् ।
हावभावादिसुलयतालादिगतिसङ्गतम् ॥८१८॥

---

1. नृ.सं. कटीच्छिन्नेन वा P 14
2. नृ.सं. इहोदितस्य दिक्स्थानकरणैः
3. नृ.सं. तदनुद्ग्रहेण

यदोल्लासलसद्गात्रम्पात्रमारचयेत्तदा ।
स्वरमण्डक[1]-नृत्यं स्याल्लक्ष्यवेदिमनोहरम् ॥८१९॥

इति स्वरमण्डनृत्तम् ।

अथ गीतनृत्यम् (प्रबन्धाः)

गीतताल[2]ग्रहसमं समुच्चरति तादिकम् ।
पूर्ववद्वर्णसङ्घातन्तालधारिणिहारिणीम् ॥८२०॥

येन येनेह गीतेन नृत्येत्पात्रं ससौष्ठवम् ।
तत्तन्नृत्यम्बुधैर्देश्यन्तत्तन्नामपुरःसरम् ॥८२१॥

स्थाय्यादि[3]वर्णानङ्गेन भावान्नेत्रादिरागतः ।
हस्तैरभिनयेदर्थान् पदवाक्य[4] समुद्भवान् ॥८२२॥

तालग्रहानङ्घ्रिपदैः समादिश्च यथोचितम् ।
अनेनैव प्रकारेण गीतनृत्तं समाचरेत् ॥८२३॥

एलादयः शुद्धसूडावर्णाद्यालिक्रमास्तथा ।
श्रीरङ्गाद्या विप्रकीर्णास्तथा सालगसूडकाः ॥८२४॥

तथान्येऽपि प्रसिद्धाश्च त्वप्रसिद्धा यथोचिताः ।
सार्थाङ्गन्नृत्यवन्नृत्येन्निरर्थाङ्गन्तु नृत्तवित् ॥८२५॥

इति गीतनृत्यम् ।

चिन्दु : (चिन्दुजातयः)

देशी द्रविडदेशस्य विडु (चिन्दु)-रित्यभिधीयते ।
तत् षोढा दृश्यते शुद्धचिन्दुश्च बिन्दुचिन्दुकः ॥८२६॥

---

1. नृ सं. स्वरमञ्चक P 14
2. Ibid तान
3. Ibid स्थाप्यादि
4. Ibid तत्तद्वाक्य

तिरुवर्णीचिन्दुः मालाचिन्दुकः कोलचारिकः ।
गीतमुद्रादिकश्चिन्दुरिति तल्लक्षणं यथा ॥८२७॥

यत्रोद्ग्राहध्रुव[❀पदो[1] बद्धो द्रविडभाषया ।
त'च्छुद्धचिन्दुकः' प्रोक्तो मेलापाभोगवर्जितः ॥८२८॥

यत्रोद्ग्राहञ्च मेलापं सकृद्गीत्वा ततो ध्रुवम् ।
प्रभुनामाङ्कितं द्वित्रिविरामाढ्यम्मुहुर्मुहुः ॥८२९॥

गीत्वा ध्रुवेषु] 0मोक्षःस्याच्चेत्तदा 'बिन्दुचिन्दुकः' ।
नेतृनामाङ्कितोद्ग्राहस्तन्मानात्सार्धकः ध्रुवः ॥८३०॥

एतद्द्वयम्मुहुर्गायेत् तदा 'तिरुवर्णि' विदुः ।
अनियतपदभाग[2]माला 'मालादिचिन्दुकः' ॥८३१॥

यत्र पाटाक्षरालापस्ततो वाक्यमतालकम्[3] ।
पदरागसमुद्दीप्तन्तत्कथाबीजसूचकम् ॥८३२॥

ततश्च चिन्दवः पञ्च सप्त वा मध्यमध्यतः ।
पिल्मिरू कैमिरू रम्यकलासैरति[4]चित्रितम् ॥८३३॥

शास्त्रसङ्गकथावृत्तिश्चेत्तदा 'कोलचारिका' ।
अन्यत्कथाप्रवृत्तिश्चेत्तदा 'कट्टणचिन्दुकः'[5] ॥८३४॥

**गीतमुद्राचिन्दु :**

गीतवद्गीतमुद्रादिचिन्दुकोऽष्टविधः स्मृतः ।
मेलापकान्तराभोगसमस्तव्यस्तहीनतः ॥८३५॥

---

1. Zl यत्रोद्ग्राहश्च ध्रुवकः ❀–0. L पुस्तके अंशस्यस्याभाव।
2. नृ.सं. भागे माला P 15
3. नृ.सं. वाक्यमतात्मकं P 15
4. नृ.सं. रिति P 15
5. नृ सं. कट्टेणचिन्दुकः P 16

द्विःत्रिश्चतुः पञ्चधा तु चिन्दवः परिकीर्तिताः ।
यदि प्रयोगो मेलापे क्वचित्प्रयोगको ध्रुवे ॥८३६॥

तदोद्ग्राहे च मुक्तिः स्याद्यदिप्रयोगकोऽन्तरे ।
तदा तु ध्रुवके मोक्ष एवन्न्यासस्तु सर्वदा ॥८३७॥

## चिन्दुनृत्यम्

स्पन्द्यस्पन्दिताध्यर्द्धिःस्थितावर्त्तादिमुख्यया[1] ।
वैशाखमण्डलालीढप्रत्यालीढादिभिस्तथा ॥८३८॥

रेखा सौष्ठवलास्याङ्गैः शिरोऽङ्घ्रिकररेचकैः ।
भावहावविलासैश्च सुलूचित्रकलासतः ॥८३९॥

चारुपाटानुगञ्चञ्चत्किङ्किणीध्वनिपेशलम् ।
तत्तज्जातियुतन्देश[2]-भाषासाहित्यशोभितम् ॥८४०॥

सम्प्रदायानुसारेण'चिन्दुनृत्यं' समाचरेत् ।
यत्र किङ्किणिकावाद्यैराहति'र्घर्घरो' मतः ॥८४१॥

## घर्घरभेदा :

पडिवाटः❀ शिरिपिडी पडवोऽलगपाटकः× ।
सिरिहिरः▯ खुलुखुलुश्चेति घर्घरः षड्विधो मतः ॥८४२॥

भूमिलग्नाग्रयोरङ्घ्र्योः पर्यायाद् भूमिखण्डनम्[3] ।
पार्ष्णिद्वयेन वा पार्ष्ण्या त्वेकतः[4] 'पडिवाटकः' ॥८४३॥

▣भूलग्नतलपादेन पुरः पश्चान्मुहुर्मुहुः ।
सरणं वापसरणं क्रमात् 'शिरिपिडी'[5] भवेत् ॥८४४॥

---

1. नृ.सं. मुख्यतः P 16
2. नृ सं. वेष P 16
   ❀नृ.सं. पिडिवाटः P 16, ×पटवो लगपाटकः, ▯शिरितिरः ibid
3. सं.र. कुट्टनमिति पाठः 7/1301
4. पार्ष्ण्या वैकया स्यात् इति सं.र.
5 सिरिपटो इति सं.र.

एकपादतलेनैव 'पडवो' भूमिखण्डनम् ।
अङ्घ्रिद्वयोश्च पर्यायात् कम्पनं व्योम्नि कोमलम् ॥८४५॥

तज्ज्ञेयोऽ'लगपाटाख्यो' मृदङ्गाल्लोलपाटवत् ।
सत्येकस्मिन् समे पादे त्वपरः प्रेरितः पुरः ॥८४६॥

यस्तस्य जङ्घया कम्पः प्रोक्तः 'सिरिहिरो' बुधैः ।
यद्वा द्वयोः स्वभावेन तिष्ठतोः पादयोर्भुवि ॥८४७॥

जङ्घयोः कम्पनम्प्राहुर्धीराः सिरिहिरन्तदा ।
भूलग्नाग्रस्य वामाङ्घ्रिः पार्ष्ण्या यद्भूमिखण्डनम् ॥८४८॥

भूलग्नाग्रस्य चान्यस्य भ्रमः सव्यापसव्यतः ।
योऽसौ 'खुलुखुलुः' प्रोक्तो घर्घरो नृत्तकोविदैः⧈ ॥८४९॥

दिशाऽनया परेप्यूह्या घर्घराः शोभयान्विताः ।
सर्वे घर्घरभेदास्ते कार्यास्तालानुगामिनः ॥८५०॥

**द्विधा धरूनृत्यम्**

तैलङ्गभाषया बद्धा तूद्ग्राहाऽऽभोगवर्जिता ।
सा 'धरू' कथिता धीरैः सा द्विधा परिकीर्त्तिता ॥८५१॥

मुख्या तु 'कट्टणेधरू'[3] तथा मुक्तधरू परा ।
कट्टणे[3] वन्धपर्यायस्त्वादो तत्क्रममुच्यते ॥८५२॥

अर्द्दिके वाद्यमाने तु[4] यत्र पात्रन्धृताञ्चलम् ।
रङ्गम्प्रविश्य तत्रादावालापेन तु[5] नर्त्तनम् ॥८५३॥

---

1. ख. पर्यायात्
2-2. श्लोकाः 844 तः-849 पर्यन्ता नृ.सं. नोपलभ्यन्ते ।
3. नृ.सं. कट्टडि P 19
4. नृ.सं. ऽपि P 17,
5. L मु

⧈सं.र. खलुहुलः 7/1313

तत्तत्करादिभिः पाटैर्लयतालसमन्वितम् ।
धात्वादिरहितङ्गीतमालापः परिकीर्तितः ॥८५४॥

ततः स्यात्ससुलूतुङ्गलास्याङ्गैश्च समन्वितम् ।
विचित्रचरणं साक्षाद्रागमूर्त्तिरिवाङ्गकैः ॥८५५॥

दर्शयन् पिल्मुरुकैमुर्वादिभिर्मध्यमध्यतः ।
त्रि-चतुः-पञ्च-षट्-सप्तधरूभिः सह पट्टिभिः ॥८५६॥

ह्रावभावसुलास्याङ्गःनर्त्तनन्तनुयान्नटी ।
विलम्बितोच्चारमानं यदेकयतिसुन्दरम् ॥८५७॥

अतालम्पदमेकञ्चेद्बद्धः कर्णाटभाषया ।
सा 'पट्टिः'[1] कथिता तज्ज्ञै रसिकानन्ददायिनी ॥८५८॥

ततः कलासतो रम्यैः प्लुत[2]मानस्वरैः पुनः ।
कैमुरूशब्दतः पश्चाच्चित्रन्नर्तनमाचरेत् ॥८५९॥

तालतन्त्रीमृदङ्गानां समन्तान्मेलनं यदा ।
नर्माङ्गन्नर्त्तनं यत्र 'सुलूप'[3]न्तन्निगद्यते ॥८६०॥

तालतुल्यसुलूतुङ्गघर्घरध्वनिपेशलम् ।
पुनः कलासशब्देन द्विरावृत्ति[4]-पदेन च ॥८६१॥

विधाय नर्तनन्त्वर्ह्निनाम्नि न्यासं समाचरेत् ।
तदा कट्टरणेनृत्यं स्याद्देशी[5] तैलङ्गदेशजम् ॥८६२॥

---

1. L पट्टी
2. नृ.सं. द्रुत P 17
3. नृ.सं. सुलुपं P 17
4. h त्त
5. L वंशी

नमनोन्नमनन्तुङ्गमूर्ध्वाधः सौष्ठवस्य च ।
चतुर्विरामकैर्बद्धैः पदैरुद्ग्राहनिर्मितम् ॥८६३॥

तालेन येन केनाऽपि युतन्तत्पदसंज्ञकम् ।
एतदुक्तविपर्यासाद्वा 'धरूकंट्टणो[1] मता ॥८६४॥

## मुक्तिकाधरू

धरूपूर्वार्द्धके यत्र पिल्मिरू सम्प्रयुज्य च ।
पुनः पूर्वार्द्धकम्पश्चाच्चरमन्नृत्तमाचरेत् ॥८६५॥

तालस्य लयभेदेन कतिवारन्तु नर्त्तयेत् ।
अथवान्यधरूपूर्वभागा[2]-दुन्नतरा[3] परा ॥८६६॥

तालद्रुतलयोऽप्यत्र सा प्रोक्ता 'मुक्तिकाधरू' ।

## ध्रुवपदनृत्यम्

गीर्वाणमध्यदेशीयभाषासाहित्यराजितम् ॥८६७॥

त्रिचतुर्वाक्यसम्पन्नं नरनारीकथाश्रयम् ।
शृङ्गाररसभावाढ्यं रागतालपदात्मकम् ॥८६८॥

पादान्तानुप्रासयुतं पादान्तयमकञ्च वा ।
प्रतिपादं यत्र बद्धमेवम्पादचतुष्टयम् ॥८६९॥

उद्ग्राहध्रुवकाभोगाऽन्तराःध्रुवपदं स्मृतम् ।
गीयमाने ध्रुवपदे हावभावमनोहरे ॥८७०॥

नर्त्तनन्तनुयात्पात्रं कान्तादृष्ट्यादिसन्मुखम् ।
नानागतिलसद्भावं[4] लसल्लास्याङ्गसुन्दरम् ॥८७१॥

---

1. नृ.सं. कट्टडि
2. नृ.सं. धरूपूर्वपूर्वा:
3. L. टुंनतरा, नृ.सं. डुंनतरा P 18
4. Q वाचं

पदान्तरान्तरा थद्देत्तगेति-[1] तरङ्गकम् ।
खण्डमानेन रचितम्मध्ये मध्ये च कम्पनम् ॥८७२॥

सर्वाऽभिनयसम्पन्नं रेखालावण्यशोभितम् ।
तदा ध्रुवपदन्नृत्यम्मुखरागविभूषितम् ॥८७३॥

स्यादक्षिभ्रूविकारादिश्रृङ्गाराकृतिसूचकाः ।
सग्रीवो[2] रेचको भावो भावश्चित्तसमुद्भवः ॥८७४॥

इति निबन्धनृत्तम् ।

## अनिबद्धनृत्तम्

अथाऽनिबद्ध[3]नृत्तस्य[4] क्रमं वक्ष्यामि लोकतः ।
नामावली यतिर्नेरीर्नेरिः सालङ्गपूर्वकः ८७५॥

सङ्कीर्णनेरिर्भावादिर्नेरिश्च नडनेरिकः ।
कैवर्तन[5]-म्मुरू रट्टे[6]-मुरू[6] च तालरूपकम् ॥८७६॥

गुण्डालं मलक*म्मण्डी मुडुपञ्च मुरण्डरी[7] ।
कुडुपन्तिर्यक्करणॅल्लावणी वटुकन्ततः[8] ॥८७७॥

नानादेशोद्भवा देशी तत्तद्दिक्स्वाश्रिता[9] इति ।

एतेषां लक्षणानि

---

1-1. पादान्तरान्तरा पद्दं इगेति, नृ.सं. पदान्तरान्तरागा यद् दन्तोद्योतितरङ्गम P 1च
2. L सग्रीव, नृ.सं. सग्रीव P 18
3. नृ.सं. निबन्ध
4. L. नृत्यस्य
5. Q कैवर्तक मुरू
6. Q रट्टं०
7. L पुरण्डरी
8. चटुकं
9. L दिक्षाश्रिता, नृ.सं. तत्तद्दिक्शास्त्रता P 18 दिक्षाप्सिता

*नृ.सं. कमलं

**नामावली**

यथाभिनयसम्पन्नं विचित्रगतिसुन्दरम् ॥८७८॥

तावदि[1]-ग्रहभेदेन लयतालसमन्वितम् ।
नामावली नृतमिदन्नृत्येज्जनमनोहरम् ॥८७९॥

**यति :**

विरामसाम्यगति[2]-भिर्लागैर्नानामनोहरैः ।
लयतालविचित्राङ्गै'-र्यतिनृत्तं' समाचरेत् ॥८८०॥

**नेरि :**

आदितालानुगं यत्र विलम्बितलयान्वितम् ।
विचित्रगतिसम्पन्नं सामान्या नेरिरिष्यते ॥८८१॥

**सालङ्गनेरि :**

सा एवाऽयुतसंयुक्तहस्तैः 'सालङ्गनेरिका' ।

**सङ्कीर्णनेरि :**

युक्तायुक्तैर्नृत्तहस्तैः सङ्कीर्णा नेरिरुच्यते ॥८८२॥

**भावनेरि :**

रसभावाङ्गदृष्ट्याद्यै'र्भावनेरिः' प्रकथ्यते ।

**नडनेरि :**

सा एव द्रुतमानेन नडनेरिरिति स्मृता ॥८८३॥

**कैवर्त्तनम्**

मणिबन्धयुतौ हस्तौ भ्रामयेत्सविलासकम् ।
सव्यापसव्ययोर्यत्र तद्योग्यगतिसुन्दरम् ॥८८४॥
विदध्यान्नर्तनं सम्यक् तदा 'कैवर्त्तनाभिधम्' ।

---

1. Q तीवटी
2. L गेति

### मुरू

यत्राङ्गम्मोटयेत्तिर्यग्विक्षिप्ताक्षिप्तकौ मुहुः ॥८८५॥
त्रिपताकौ पुरापात्रं सा 'मुरू' कथिता बुधैः ।

### रट्टमुरू

उत्कण्ठ 'ट'-स्थो नटो गात्रम्मोटयेद्द्रुतमानतः ॥८८६॥
वपुः पुनः पुनर्यत्र 'मुरूकं रट्टपूर्वकम्' ।

### तालरूपकम्

कञ्चित्तालमुपक्रम्य प्रयोगे बहुलद्रुतम् ॥८८७॥
सङ्कीर्णानेकगतिभिः प्रवृत्तं 'तालरूपकम्' ।

### गुण्डालम्

जङ्घाया बाह्यमन्तर्यद्विदधद्भ्रमणन्द्रुतम् ॥८८८॥
तालानुगतिनृत्तञ्चेद्गुण्डालङ्गदितन्तदा ।

### मलकम्[1]

बहुभिर्बाहुभेदैश्च साऽलपल्लववर्त्तनैः ॥८८९॥
कटीपार्श्वशिरोरेखा[2] पूर्वकम्मलकं तदा[3] ।

### मण्डी

पृष्ठाग्रसारिताभ्याञ्चेत्पादाभ्यां नतजानुकम् ॥८९०॥
पर्यायान्नर्तनङ्कुर्यात् तदा मण्डीति कीर्तिता ।

### मुडुपम्

यदा मुडुपचारीभिर्नृत्येत्तालानुरोधतः ॥८९१॥
तदा मुडुपमित्युक्तं विचित्रगतिरञ्जितम् ।

---

1 नू. सं. कमलं 20
2. L. रेवा
3. नू.सं. कमलं

### मुरण्डरी

मुडुपस्थो नटो यत्र विधाय भ्रमरीम्पुनः ॥८९२॥
पुनर्मुडुपमानृत्य नृत्येच्चेत्सा मुरण्डरी ।

### कुडुपम्

कुञ्चिताङ्गुलिना यत्र प्रसृताङ्गुष्ठकेन चेत् ॥८९३॥
प्रसार्य जङ्घिकाकम्पं विचित्रद्रुतमाचरेत् ।
घर्घरीभिः समायुक्तन्तदेतत्कुडुपम्मतम् ॥८९४॥

### तिर्यक्करणम्

कञ्चित्करणमास्थाय विदध्याद्भ्रमरीं यदा ।
अवसाने पुनः कञ्चित्करणं समुपाश्रयेत् ॥८९५॥
एवम्मुहुर्मुहुर्यत्र करणन्तिर्यपूर्वकम्[1] ।

### लावणी

समपादस्थितम्पात्रङ्कटीन्यस्ता[2]ऽर्धचन्द्रकम् ॥८९६॥
कटेरुपरि तत्कार्य[3]-म्भ्रामयेल्लावणी तदा ।

### वटुः

जानुभ्याम्भूमिलग्नाभ्याम्पद्भ्यां वा मण्डलाकृतिः ॥८९७॥
नम्रपृष्ठँल्लताहस्तौ पात्रम्भ्रमणमाचरेत् ।
तदासौ वटुरित्युक्तः सूर्यमण्डलवद्गतिः ॥८९८॥

### जक्कडीनृत्यम्

आवनीभाषयायुक्तं यत्र गीतन्धृताञ्चलम् ।
कल्लादिगजरायुक्तन्त्वाहङ्गेन[4] विभूषितम्[5] ॥८९९॥

---

1. Q तिरिप०
2. L स्था
3. नृ. सं. काय P.21
4. L च
5. नृ. सं. कृत्याहृगेन भूषितम्

विदध्यान्नर्तनन्नानालयं यत्र विचित्रितम् ।
कोमलाङ्गैर्यदा नृत्यम्भ्रमर्यादिविराजितम् ॥६००॥

सशब्दा च क्रिया यत्र ध्रुवशम्पादिभेदतः ।
यत्र चेष्टाविरहितन्तन्नृत्तञ्जक्कडी मतम् ॥६०१॥

पारसीकैः पण्डितैस्तूद्ग्राहादिस्वरभाषया ।
यद्गीतञ्जक्कडीसंज्ञं यवनानामतिप्रियम् ।६०२॥

**रासनृत्यम्**

मुरजादिषु वाद्येषु वाद्यमानेषु वादकैः ।
कुतूहलाय भूपानां वसन्ताद्युत्सवेषु चेत् ॥६०३॥

क्रमाच्चत्वारि पात्राणि यद्वाष्टौ षोडशाथवा ।
द्वात्रिंशद्वा चतुःषष्टिः सन्धीभूय वियुज्य च ॥६०४॥

प्रनृत्यन्ति समादाय दण्डकौ पाणिपङ्कजैः ।
अङ्गुष्ठसम्मितौ स्थौल्ये दैर्घ्ये च षोडशाङ्गुली[1] ॥६०५॥

स्वर्णादिधातुबद्धान्तौ सरलौ वर्त्तुलौ दृढौ ।
चित्रितौ वर्णकैर्ग्रन्थिवर्जितौ मसृणौ तथा ॥६०६॥

तत्तद्देशानुसारेण धृत्वा वा दण्डचामरे ।
दण्डक्षौमाञ्चले यद्वा दण्डकाछुरिकेऽथवा ॥६०७॥

चतुर्भिः पञ्चभिर्घातैर्यद्वा षड्भिः प्रहारकैः ।
सशब्दघातभेदैश्च पुरतः पृष्ठतोऽपि च ॥६०८॥

पार्श्वयोरुभयोस्तद्वद्घातभेदैस्ततः परम् ।
चारीभिर्भ्रमरीभिश्च चित्रैस्तैर्वामसव्यतः ॥६०९॥

असकृन्मण्डलीभूय गीतताललयानुगम् ।
तदोदितम्बुधैर्दण्डरासञ्जनमनोहरम् ॥६१०॥

1. नृ.सं. लै: P 21

दण्डैर्विना कृतन्नृत्त्यं रासनृत्त्यन्तदेव हि ।
देशीप्रसिद्धानन्ता हि नानादेशजनाश्रिता: ॥६११॥

यथा चारु तथा कार्या नृत्यविद्याविशारदै: ।
चार्य्यधिष्ठानवन्नृत्त्यन्नृत्यमन्यद्विडम्बनम् ॥६१२॥

लक्ष्यलक्षणसन्दिग्धपरम्परान्धसङ्गतम् ।
तन्नर्त्तनं विठ्ठलेन नि:सन्दिग्धमकारि हि ॥६१३॥

अकबरनृपरुच्यर्थम्भूलोके सरलसङ्गीतम् ।
कृतमिदं(ह) बहुतरभेदं सुहृदां हृदये सुखम्भूयात् ॥६१४॥

श्रीमत्पण्डरिविठ्ठलेन रचितँल्लोकोत्तरं सुन्दरं ।
दृष्ट्वा नर्त्तननिर्णयम्भुवि कलौ तत्तत्प्रयोगाधिकान् ।

श्रीमत्तालमृदङ्गगानचतुरश्रीवंशनृत्त्याग्रिणां ।
सर्वेषामपि दर्शयन्तु गुरवो भूत्वा सदा(मुदा ?) पण्डिता: ॥६१५॥

इति श्रीकर्णाटकजातीय-पण्डरीकविठ्ठलविरचिते
नर्त्तननिर्णये नर्त्तकप्रकरणञ्चतुर्थं समाप्तम् ।

शुभमस्तु ।

———

पुण्डरीकविठ्ठलविरचिता

# [3]रागमाला

कल्याणम्बहुलं (लीं) देशीं वसन्तं ललितम्मुदे ।
नट्टनारायणं वन्दे श्रीसारङ्गविभासकम् ॥१॥

विठ्ठलेन समुद्धृत्य सारन्नर्त्तननिर्णयात् ।
श्रीमत्कपिलमुन्यर्थं क्रियते रागमालिका ॥२॥

रागहेतुकनादस्य भेदानादौ वदाम्यहम् ।

अग्रे, ग्रन्थकृता स्वीयनर्तननिर्णयग्रन्थादुद्धृत्य कतिपयश्लोका अत्र सङ्गृहीता एव सन्ति—तद्यथा

| नर्त्तननिर्णयोक्त— श्लोकसङ्ख्या | प्रस्तुतग्रन्थस्य श्लोकसङ्ख्या |
|---|---|
| ३/२३-४१ | १/३-२१ |
| ३/४२-४३ | १/२२ |
| ३/४४ | १/२३ |
| ३/४७ (उ.) | १/२४ (पू.) |
| ३/४८ (पू.)-५१ (उ.) | १/२४ (उ.) १/२८ (पू.) |
| ३/५२ (उ.)-५४ (उ.) | १/२८ (उ.) |
| | १/३० (उ.) |
| ३/५६ (उ.)-५७ (उ.) | १/३१ (पू.) १/३२ (पू.) |
| ३/५९ (पू.'-३/६१ (पू.) | १/३२ (उ,)-३४ (उ.) |
| ३/६३ (उ.)-३/७१ (उ.) | १/३५ (पू.) १/४३ (पू,) |
| ३/७२ (पू.) | १/४३ (उ.)❀ |

❀तस्य भेदाः बहुतराः योजनीया विचक्षणैः । १/४४ (पू.) (३/७२ (उ.))

(पद्यमिदं किञ्चित् परिवर्त्तितम्)

३/१०५ (उ.) १/४४ (उ.)

ग्रहांशन्यासमन्द्रादिपूर्णापूर्णविवेकतः ।
वैचित्र्ययुक्तागमकैरालप्तिः कथिता बुधैः ॥ १/४५

३/१४५-१४७ १/४६-४८

३/१५०-२३४ १/४९-१३३

नरपतिस(सु)सभायाङ्कण्ठसद्भूषणार्थं
सकलगुणिगणाढ्यै रागविद्विठ्ठलोक्ता ।
विविधगुणसुरूपैर्योजिता रागमाला
सुललिततरकण्ठे धार्यतां सर्वलोकैः ॥१३४॥

दशशतकर[1] माली(ला) भानुभिर्भाति भानु-
र्दशशतसि (शि-) रसा भू[2] र्धायते संस्थिरा भूः ।[3]
दशरथसुतनामोच्चारमात्रञ्च यावन्-
निवसतु भुवि तावद् वैठ्ठली रागमाला ॥१३५॥

शाके वस्वङ्कवेदाब्जकपरिगणिते धातृसंवत्सरेऽस्मि-
न्नाषाढे कृष्णपक्षे शशिधरसुदिने पञ्चमी रेवती भे ।
नागम्बाधर्मसूनुर्द्विजवरतिलको विट्ठलोऽस्तीह विद्वान्
तेनेयं रागमाला रसिकजनगले भूषणार्थङ्कृता हि ॥१३६॥

इति श्रीकर्णाटकजातीय–पुण्डरीकविठ्ठलविरचित–
रागमाला समाप्ता ॥

---

1. Z6 दशशतदश
2. Z6 भि
3. Z6 संस्थिरोभि

# ४–रागमञ्जरी

॥ श्रीगणेशाय नमः ॥

श्रीमत्कच्छपवंशदीपकमहाराजाधिराजेश्वर-
स्तेजः पुञ्जमहाप्रतापनिकरो भानुः क्षितौ राजते ।
तस्यासीद्भगवन्तदासतनयो वीराधिवीरेश्वरः
क्षोणीमण्डलमण्डनो विजयते भूमण्डलाखण्डलः ॥१॥

तस्य द्वौ तनयौ ह्यनुक्तविनयौ शूरौ महाधार्मिकौ
जातौ पङ्क्तिरथात्मजौ त्वकबरक्षोणीपतेः स्वौ भुजौ ।
सिंहौ माधवमानपूर्वपदकौ सङ्ग्रामदक्षावुभौ
तेगत्याग-[1] सहस्रहस्तकलितौ श्रीसर्वभूमीश्वरौ ॥२॥

अकबरनृपधर्मी (र्म्यौ?) शक्रतश्चातिधर्मी(र्म्यौ?)
धरणिगगनमध्ये जङ्गमौ मध्यमेरुः (रू) ।
सकलनृपतिताराश्च(च)-न्द्रसूराविमौ द्वौ
जगति जयनशीलौ माधवा ?-मानसिंहौ ॥३॥

तत्र माधवसिंहोऽयं राजा परमवैष्णवः ।
सर्वदा विष्णुभक्त्यर्थं नाट्यारम्भं करोति हि ॥४॥

अनेककोटिब्रह्माण्डनायक ! द्रौपदीलज्जानिवारक ।
बहुरूपधारक पारिजातापहारक ।
दुष्टभञ्जक-शिष्टपालक-गोपीजनवस्त्रापहारक ॥

---

1. ZI तेजस्त्याग

गोवर्धनोद्धारक । देवकीनन्दनम् (न) ।
यशोदानन्दवर्धन । सङ्कटभञ्जन ॥

कंसचाणूरमर्दन । नन्दनन्दन ॥
भक्तवत्सल सच्चिदानन्दविग्रह ॥
तेषां तु वेद्यस्य ? तेषामन्तर्वेद्याय
भक्त्युत्पादनसाधनाय ॥

श्रोतॄणां कर्णकौतूहलाय ।
सामाजिकानां मनश्चमत्काराय ॥

नाट्यारम्भमेलनं मलयति वांशिकः ।
वंशमुखोद्गीर्ण देवगान्धाररागरिगम (गरिमप्रमाण ?)
प्रभनप्र(प्रे)ङ्खोलितश्रोत्ररमणीये ।
कांस्यतालरञ्जकमृदङ्गध्वनिरणारणितः (ते) ॥

विपञ्चीध्वनिशब्दगर्भितसौन्दर्ये
आलापिनीश्रुतिसन्धान-त्रिस्थानप्रौढि–
दशविधरागनानागमकविचित्ररागालपन-
तालवैचित्र्य-मेलापकगणगन्धर्वगायन-
गीते श्रूयमाणे सति । राजा– :
शुष्काङ्गिघनचार्वङ्गि-काकली तव किन्नरि ।
वर्द्धमानोल्लसद्रागे विवादयसि तत् कथम् (?) ॥५॥

नानापण्डितमण्डिता सुरसभा श्रीधर्ममूर्त्तिः सभा
श्रीमद्राजकुमारशोभितसभा प्रख्यातनीतिः सभा ।
ब्रह्माविष्णुमहेश्वरैः परिचिता सम्पूर्णविद्यासभा
श्रीमन्माधवसिंहराजरुचिदा शृङ्गारहारा सभा ॥६॥

अगणितगणकचिकित्सकवेदान्तन्यायशब्दशास्त्रज्ञाः
दृश्यन्ते [ऽत्र च] बहवः सङ्गीती नात्र दृश्यतेऽप्येकः ॥७॥

माधवसिंह इत्युक्ते विठ्ठलेन द्विजन्मना ।
नत्वा गणेश्वरन्देवं रच्यते रागमञ्जरी ॥८॥

युष्मदो दक्षमञ्चस्तु न क्वचास्ति जगत्त्रये ।
किन्तु मत्प्रेमतः सन्तः पुरस्कुरुत मत्कृतिम् ॥९॥

वहुगतिरञ्जकरसिको गुञ्जत्तानक्रिया (यो) द्विपक्षश्च ।
अकश्चरैकरेफो जयति श्रीरागमञ्जरी रसयः(पः) ॥१०॥

वा(ना)दश्रुतिस्वरग्राममूर्च्छनातानमण्डितः ।
जनचित्तं रञ्जयति स रागः कथितो बुधैः ॥११॥

——

## अथ द्वितीयोऽध्यायः

### नादः

मनोयुक्ते विवक्षात्मा[1] हन्ति वह्निं मनोऽनलः ।
प्रेरयत्यनिलं प्राणानिलश्चोर्ध्वं क्रमाच्चरन् ॥१॥

नाभिहृद्गलशीर्षास्येष्वाविर्भावयति ध्वनिः (निम्) ।
नादोऽतिसूक्ष्मः सूक्ष्मश्च पुष्टोऽपुष्टश्च कृत्रिमः ॥२॥

पञ्चाख्याइ(मि)ति धत्तेऽसौ चतुर्द्धा व्यवहारतः ।
अनुमन्द्रो नाभिदेशे मन्द्रो हृदि गले पुनः ॥३॥

मध्यस्तारस्तु मूर्ध्नि स्याद्द्विगुणश्चोत्तरोत्तरः ।
तद्ग्राहकाश्च श्रुतयो यथा पारदगर्त्तकाः ॥४॥

ध्वनिस्तु नदधातोर्हि सद्भिर्नादो घञि स्मृतः ।
हेतवो नादभेदस्य विरश्चः छिद्र(तिर्यक्सच्छिद्र-नाडिकाः) ॥५॥

1. Z9 क्ष्वा

द्वाविंशतिः प्रतिस्थाने[1] सोपानाकारवत्क्रमात् ।
वायुपूरणतस्तासु तावत्यस्तूत्तरोत्तरम् ॥६॥
प्रभवन्त्युच्चोच्चतराः श्रुतयः श्रवणान्मता[2] ।
तीव्रा कुमुद्वती मन्दा छन्दोवती दयावती ॥७॥
रञ्जनी रतिका रौद्री क्रोधा वज्री प्रसारिणी ।
प्रीती मृगा क्षिती रक्ता सन्दीपिन्यथ लापिनी ॥८॥
मन्दती रोहिणी रम्या चोग्रा क्षोभिणिकेति च ।
श्रुतिनामानि ख्यातानि पूर्वाचार्यैः क्रमादिति ॥९॥

इति श्रुतयः ।

**स्वराः**

रागादिव्यवहाराय तासु सप्तस्वराः स्थिताः ।
षड्जश्च रिषभश्चैव गान्धारो मध्यमस्ततः ॥१०॥
पञ्चमो धैवतश्चाऽथ निषादश्चेत्यनुक्रमात् ।
तेषां संज्ञा सरिगमपधनीत्यपरा मता ॥११॥
वेदाऽचलाङ्कश्रुति[षु]त्रयोदश्यां श्रुतौ ततः ।
सप्तदश्याञ्च विंश्याञ्च द्वाविंश्याञ्च श्रुतौ क्रमात् ॥१२॥
षड्जादीनां स्थितिः प्रोक्ता प्रथमा भरतादिभिः ।
ग्रसपाः पूर्वपूर्वस्मात् सञ्चरन्त्युत्तरोत्तम् ॥१३॥
त्रिस्त्रिर्गतीस्ते प्रत्येकं यान्ति गश्च चतुर्गतीः ।
यद्यद्रागोपयोगी स्यात्तत्तत्सादिर्गति[3]-र्भवेत् ॥१४॥
साधारणः कैशिकी चान्तरकाकलिनौ तथा ।
[आद्यावेकगती ज्ञेयावन्यौ द्विगतिकौ गनी] ॥१५॥

1. Z10 स्थानं
2. Z9 श्राव्यमात्रतः
3. Z10 स्यात्तत्तदिच्छागति

ऊर्ध्वंखलस्तु गान्धारो मध्यमोपरिसंस्थितः ।
त्रिगतिमस्य संज्ञा स्यान् मनुः पक्षान्तिको नृपः ॥१६॥

गन्योस्त्रिगतिकौ भेदौ मनू पक्षान्तिकौ नृपौ[2] ।
अथ कैशिकिनावाद्यावूर्ध्वंखलौ द्वितीयकौ ॥

अत्युच्छृङ्खलनामानौ तृतीयगतिकौ रिधौ ।
इत्येवं स्वरभेदाश्च स्थाने स्थाने भवन्ति हि ॥१८॥

मयूरश्चातकश्छागः क्रौञ्चकोकिलदुर्धराः (दर्दुराः) ।
गजश्च सप्त षड्जादीन् क्रमादुच्चारयन्त्यमी ॥१९॥

चतुर्विधाः स्वरा वादी संवादी च विवाद्यपि ।
अनुवादीति[3] वादी तु प्रयोगे बहुलस्वरः ॥२०॥

अंशः स्थायीति पर्यायौ रागोत्पादनहेतुकः ।
श्रुतयो द्वादशाऽष्टौ वा ययोरन्तरगोचराः ॥२१॥

मिथः संवादिनौ तौ स्त अन्येषाञ्च मते मतौ ।@
एकश्रुत्यन्तरौ यौ कौ तौ मिथश्च विवादिनौ[4] ॥२२॥

शेषाणामनुवादित्वं ज्ञेयमन्वर्थतः क्रमात् ।
ग्रहांशन्यासापन्यास इति भेदास्तथा पुनः ॥२३॥

गीतारम्भो ग्रहः प्रोक्तस्त्वंशो जीवोपि व्यापकः ।
गीते समाप्तिकृन्न्यास[5]-स्त्वपन्यासः स उच्यते ॥२४॥

विदारीवानपन्यासो विदारीछेदकृन्मुहुः ।
सर्वत्र रागतस्त्वेते स्वरभेदा भवन्ति हि ॥२५॥

---

1-1. Z8 मस्य त्रिगतिभेदस्य मनुः पक्षान्तिको नृपः ।
2. Z9 मतः
3. Z10 वादी च
@ Z10 स्तो गत्यादेश्च विभागतः
4. Z9 प्रतिवादिनौ
5. Z न्नास्य

हृतिः श्रुतिस्ततो लग्नो[1]-जातोऽनुरञ्जनध्वनिः[1] ।
भावी दीप्तः श्रोतृचित्तं स्वतो रञ्जयति स्वरः ॥२६॥

इति स्वराः ।

**ग्राम :**

स्वराणां निचयो ग्रामो मूर्च्छनादेः (दि) समाश्रितः ।
त्रिधा स कथितो भेदात् प(षड्ज)मध्यमगाख्यया ॥२७॥

षड्जा(ड्ज-) ग्रामः(मे) षड्जकस्य संवादी पञ्चमोऽलः ? (मतः) ।
पश्च म-नृपसंस्थश्चेन् मध्यमग्रामकश्च सः ॥२८॥

स्वस्वपूर्वापरस्वरश्रुतिस्थौ युग्मकौ गनी[2] ।
गान्धारग्रामकः ख्यातः शार्ङ्गदेवेन सूरिणा ॥२९॥[3]

षड्जग्रामाश्रितान् रागान् सर्वे गायन्ति गायकाः ।
तस्मान्मुख्यतमः षड्जग्राम एव न चापरौ ॥३०॥

गन्योः स्थाने रिधौ यत्र लघुषड्जपयोर्निमौ ।
गान्धारो मध्यमस्थाने गग्रामो याष्टिके मते ॥३१॥(?)

न्यासग्रहांशेषु च पूर्णताया-
मथ श्रुतौ षाडव ओडवेऽपि ।
सर्वत्र देशीगतरागवृन्दे
श्रीमद्धनूमान्नियमं न वक्षे (ब्रूते) ॥३२॥

इति ग्रामः ।

---

1-1. Z9 लग्नग्रजातोऽनुरागध्वनिः
2. Z9 युग्माकनी
3. ग्रामकोऽयम्पाठः । शार्ङ्गदेवानुसारतस्तु 'गान्धार ऋषभस्यान्तिमां श्रुतिं, मध्यस्थ चेदादिमां श्रुतिमाश्रितः सश्चतुश्रुतिर्भवेत् । धस्तु पस्यान्तिमां श्रुतिमाश्रयति । निषादश्च धैवतस्यान्तिमां श्रुतिं गृहीत्वा षड्जस्यादिमां श्रुतिं च समाश्रितः सश्चतुः-श्रुतिर्भवति तदा तं गन्धारग्रामं नारदोमुनिराचष्ट ।
(सिं.भू.टी., सं.र. 1/4/1-5. पृ. 102)

## मूर्च्छना

क्रमात्स्वराणां सप्तानामारोहेवा(हश्चा) व-रोहणः ।
रागः संमूर्च्छति[1] यत्र श्रोता वा मूर्च्छना मता ॥३३॥

ताः सप्त मध्यषड्जेन मूर्च्छनाऽऽरभ्यतेऽग्रिमा ।
अधस्वनैर्निषादाद्यैः षड्जस्थानस्थितैः क्रमात् ॥३४॥

षडन्या मूर्च्छनाः सादीस्तदूर्ध्वं[2] सारयेत्क्रमात् ।
षड्जे तूत्तरमन्द्राऽऽदौ रजनी चोत्तरायता ॥३५॥

शुद्धषड्जा [मत्सरीकृदश्वक्रान्ताऽभिरुद्गताः[3]] ।
नामान्युक्तानि मुनिभिर्मूर्च्छनानां यथाक्रमम् ॥३६॥

इति मूर्च्छनाः ।

## तानाः

तानाः स्युर्मूर्च्छनाः शुद्धाःषाडवौडुवतीकृताः ।
षट्स्वरैः षाडवाः प्रोक्तास्तौडुवाः पञ्चभिः स्वरैः ॥३७॥

शुद्धताना इति ख्याताः पूर्णास्तानक्रियात्मकाः ।
द्विधा तानक्रिये तन्त्र्याम्प्रवेशान्निग्रहात्तथा ॥३८॥

प्रवेशः परसादृश्यमीषत्स्पर्शस्तु निग्रहः ।
असम्पूर्णाश्च सम्पूर्णाः श्रु (व्यु)त्क्रमोच्चारिताः स्वराः ॥३९॥

मूर्च्छनाः कूटतानाः स्युस्तज्ज्ञानोपाय[4] उच्यते ।
प्रस्तारसङ्ख्ये नष्टञ्चोद्दिष्टमित्यथ लक्षणम् ॥४०॥

किञ्चित् क्रमं विलिख्यादौ पूर्वः पूर्वः परादधः ।
स्वरः स्थाप्यः स चेदग्रे तत्तत्पूर्वस्वरो भवेत् ॥४१॥

---

1. Z9 संमूर्च्छाभि
2. Z8 ननदूर्ध्वं, Z10 सादीन्तदूर्ध्वं
3. Z9 ममान्युक्तानि मुनिभिमूर्च्छनानां यथाक्रमम्
4. Z8 गानोपाय

प्रस्तारो वामतः कार्यः परस्तूपरिवर्तिनः ।
मूलक्रमं-[क्रमात्] पृष्ठे शिष्टः प्रस्तार ईदृशः ॥४२॥

क्रमात्पूर्वस्वरस्थाङ्कःसङ्ख्यान्त्यादिस्वरावलि[म्] ।
अन्त्यादधोऽधो विलिखेत् कृतं त्यक्ता (क्त्वा) क्रमो भवेत् ॥४३॥

तदैकस्वरतश्चान्त्यो पान्त्यधारान्ततोऽन्यथा ।
मालाप्रस्तारक इति विठ्ठलेन प्रकीर्तितः ॥४४॥

इति प्रस्तारः ।

अङ्कानेकादिसप्तान् तानूर्ध्वमूर्ध्वं लिखेत् क्रमात् ।
हते पूर्वेण पूर्वेण त्वङ्केनाङ्कं परम्परम् ॥४५॥

एकस्वरादितानानां संख्या सञ्जायते स्फुटम् ।

इति सङ्ख्या ।

मूर्च्छनान्त्यस्वरस्थाङ्काः प्रश्नाङ्कैः पातयेत्तु तान् ॥४६॥

शेषान्प्राक्प्राक्स्वरस्थाङ्कर्यथाहननसम्भवैः ।
क्रमेण पातयेदेना[1]-हतिस्तावतिथः स्वरः ॥४७॥

हतेरभावतः किन्तु कोऽपि पूर्वस्थितः स्वरः ।
यदा द्वितीयाद्गणनं नष्टसिद्धिर्भवेत्तदा ॥४८॥

इति नष्टम् ।

नष्टबोधगता येऽङ्कास्तानन्त्याङ्केषु पातयेत् ।
शिष्ट उद्दिष्टसिद्धिः स्यादित्यभाषत विठ्ठलः ॥४९॥

इत्युद्दिष्टम् ।

**वर्णः**

गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः ।
स्थाय्यारोह्यवरोही च सञ्चारी त्वथ लक्षणम् ॥५०॥

---

1, Z9 द्येना

स्थित्वा स्थित्वा प्रयोगः स्यादेकस्यैव स्वरस्य यः ।
स्थायी वर्णः स विज्ञेयः परावन्वर्थनामकौ ।।५१।।

एतत् सम्मिश्रणाद्वर्णः सञ्चारी परिकीर्तितः ।

इति वर्णः ।

विशिष्टं वर्णसन्दर्भमलङ्कारम्प्रचक्षते ।।५२।।

तस्य भेदा बहुतरा योजनीया विचक्षणैः ।

इति भूषणम् ।

गमकः स्वरकम्पः स्याच्छ्रोतृहृदयरञ्जकः ।।५३।।

इति गमकः ।

ग्रहांशतारमन्द्रादिपूर्णापूर्णविवेकतः ।
वैचित्र्ययुक्ता गमकैरालप्तिः कथिता बुधैः ।।५४।।

न्यासादिस्थानमुक्तित्वान्मध्ये मध्येऽल्पतायुजाम् ।
स्वराणां या विचित्रत्वकारिण्यंशादिसङ्गतिः ।।५५।।

अनभ्यासैः क्वचित् का(क्वा)पि बन्धनं रेचके बलैः ।
कृतालप्ति(प्ते)र्भागः स्यात्ताने ताने प्रयोगतः ।।५६।।

इत्यालप्तिः ।

उक्तपूर्वस्वरगतिमेलाः स्यु रागसम्भवाः ।
रागा अनन्तकास्तस्माद्रागव्यक्तिस्तु वीणया ।।५७।।

इमां काष्ठमयीं वीणां वाव इकषितु ? (वाद्याञ्चिकीर्षितु-)म्मया[1] ।
क्रियतेऽत्र स्वरगति कियज्जाङ्गमवीणिकाम्(के) ।।५८।।

एकद्वित्र्यङ्कसाङ्ख्येन त्वेकधि(द्वि)-त्रिगतिस्वरः ।
प्रस्तारो नियतः कार्यो व्यस्ताव्यस्तक्रमोत्क्रमः ।।५९।।

---

1. Z10 वादकीं कथितुं मया

पूर्वापरस्वरस्थानं किन्तु नैकत्र कारयेत् ।
विवादी तु सदा त्याज्यः क्वचित्तानक्रियात्मकः ॥६०॥

काकल्यन्तरयोः स्थाने तृतीयगतिकौ निगौ ।
प्रयोगे च प्रतिनिधी क्रियेते साम्प्रदायिकैः ॥६१॥

स्वल्पप्रयोगः सर्वत्र काकली चाऽन्तरस्वरः ।
रत्नाकरेऽपि चेत्युक्तः शार्ङ्गदेवेन सूरिणा ॥६२॥

**गतिप्रस्तारः**

स रि ग म प ध नि इति शुद्धस्वराः ।

एकैकगतिकैकैकस्वरतः पञ्चधा भवेत् ।

(१) स रि१ ग म प ध नि
(२) स रि ग१ म प ध नि
(३) स रि ग म१ प ध नि
(४) स रि ग म प ध१ नि
(५) स रि ग म प ध नि१ (i)

द्विर्द्विः स्वरैकै [क]-गतिभेदतः दशधा स्मृताः ॥६३॥

(१) स रि१ ग१ म प ध नि
(२) स रि१ ग म१ प ध नि
(३) स रि१ ग म प ध१ नि
(४) स रि१ ग म प ध नि१
(५) स रि ग१ म१ प ध नि
(६) स रि ग१ म प ध१ नि
(७) स रि ग१ म प ध नि१

---

(i) अत्र सोमरागमेलो दर्शितः । स प्रस्तारपञ्चकेषु एक एव प्रस्तारो मेलरूपको दृश्यते । अन्ये अप्रयोज्याः ।

(ii) अस्मिन्पुस्तके टोडीमेलो दर्शितः । प्रस्तार-दशकेषु स एव मेलरूपको दृश्यते । अवशिष्टाः व्यर्था एव ।

(८) स रि ग म१ प ध१ नि
(९) स रि ग म१ प ध नि१
(१०) स रि ग म प ध१ नि१ (ii)

त्रित्रिस्वरैकैकगतिभेदतोऽप्यष्टधा तथा ।

(१) स रि३(१) ग३ (१) म प ध नि (१)
(२) स रि ग३(१) म३(१) प ध [१] नि
(३) स रि ग३ (१) म प ध३ (१) नि [१]
(४) स रि [१] ग [१] म [१] प ध नि
(५) स रि [१] ग म [१] प ध [१] नि
(६) स रि [१] ग म [१] प ध नि [१]
(७) स रि ग [१] म [१] प ध नि [१]
(८) स रि ग म [१] प ध [१] नि [१]

(i)

चतुःस्वरैकैकगतिभेदतः पञ्चधैव हि ॥६४॥
(१) स रि१ ग१ म१ प ध१ नि
(२) स रि१ ग१ म१ प ध नि१
(३) स रि१ ग१ म प ध१ नि१ (ii)
(४) स रि ग१ म१ प ध१ नि१
(५) स रि१ ग म१ प ध१ नि१

पञ्चस्वरैकैकगतिरेक एव प्रकीर्तितः ।
(१) स रि१ ग१ म१ प ध१ नि१ (iii)

---

(i) अनया क्रिययाऽन्येऽपि भेदाः सम्भवन्ति तद्यथा–(९) स रि१ ग१ म प ध१ नि, (१०) स रि१ ग म प ध१ नि१ इत्यादयः ।

(ii) अत्र मालवकैशिकमेलः । तृतीयप्रस्तारं विहाय सर्वेऽपि प्रस्ताराः निष्प्रयोज्याः ।

(iii) ईदृशः कोऽपि मेलोऽस्मिन्पुस्तके नैव दृश्यते (सम्पादकः)

तृतीयगतिकैकैकस्वरतस्त्रिविधो मतः ॥६५॥

(१) स रि ग३ म प ध नि

(२) स रि ग म३ प ध निं

(३) स रि ग म प ध नि३

तृतीयगतिको द्विर्द्विः स्वरतः पञ्चधा भवेत् ।

(१) स रि३ ग३ म प ध नि

(२) स रि ग३ म३ प ध नि

(३) स रि ग३ म प ध नि३ (i)

(४) स रि ग म३ प ध नि३ (ii)

(५) स रि ग म प ध३ नि३

तृतीयगतिकस्त्रिस्त्रिः स्वरतोऽपि च पञ्चधा ॥६६॥

(१) स रि३ ग३ म३ प ध नि

(२) स रि ग३ म३ प ध नि३ (iii)

(३) स रि३ ग३ म प ध नि३

(४) स रि ग म३ प ध३ नि३

(५) स रि ग३ म प ध३ नि३

तृतीयगतिकश्चतुःस्वरभेदास्त्रिधा मताः ।

(१) स रि३ ग३ म३ प ध नि३

(२) स रि ग३ म३ प ध३ नि३

(३) स रि३ ग३ म प ध३ नि३ (iv)

---

(i) अत्र गौडीमेलः

(ii) अत्र वराटीमेलः । अवशिष्टाः सर्वेऽपि व्यर्थाः ।

(iii) अत्र देशिकारमेलः

(iv) अत्र शुद्धनाटमेलः

तृतीयगतिकपञ्चस्वरतस्त्वेक एव हि ॥६७॥
(१) स रि३ ग३ म३ प ध३ नि३

एकद्वित्रिचतुष्पञ्च द्वितीयगतिकाः स्वराः ।
अप्रयोज्याः कदाचित्तु प्रयोगे न क्षमाप्यते ॥६८॥

एकैकगतिकस्त्वेको द्वितीयगतिकोऽ परः ।
एतद् द्वितयतो भेदौ द्वावेव परिकीर्तितौ ॥६९॥
स रि [१] ग [२] म प ध नि
स रि [१] ग म [२] प ध नि (i)

एकैकगतिकौ द्वौ च द्वितीयगतिकोऽपरः ।
एतद् व्यत्ययतो भेदाः षडेव परिकीर्तिताः ॥७०॥
(१) स रि१ ग१ म२ प ध नि
(२) स रि१ ग म१ प ध नि२
(३) स रि१ ग म प ध१ नि२
(४) स रि ग१ म१ प ध नि२
(५) स रि ग१ म प ध१ नि२
(६) स रि ग म[१] प ध[१] नि [२] (ii)

---

(i) अस्य अन्ये भेदा अपि भवन्ति—तद्यथा–
(३) स रि१ ग म प ध नि२
(४) स रि ग१ म२ प ध नि
(५) स रि ग१ म प ध नि२
(६) स रि ग म१ प ध नि२
(७) स रि ग म प ध१ नि२
इत्यादयः ।

(ii) एतत्क्रमस्य व्युत्क्रमतः 'सरि२ ग१ म प धनी१' इति भेदोऽपि भवति । स चात्र हिन्दोलमेलकः इति कल्पितः । अस्मिन् ग्रन्थे 'द्वितीयगतिकस्त्वेक, एकैकगतिको पराविति' कोऽपि प्रस्तारो न सर्जितः ।

त्रिस्वरैकैकगतिकाः द्वितीयगतिकोऽपरः ।
एतद्व्यत्ययतो भेदाः षडेव परिकीर्तिताः ॥७१॥

(१) स रि१ ग१ म१ प ध नि२

(२) स रि१ ग१ म प ध१ नि२

(३) स रि१ ग म१ प ध१ नि२

(४) स रि ग१ म१ प ध१ नि२

(५) स रि ग२ म१ प ध१ नि१

(६) स रि२ ग१ म१ प ध१ नि

(i)
चतुः स्वरैकैकगतिका–द्वितीयगतिकोऽपरः ।
एतद्व्यत्ययतो भेदौः द्वावेव परिकीर्तितौ ॥७२॥

(१) स रि१ ग१ म१ प ध१ नि२

(२) स रि२ ग१ म१ प ध१ नि१

एकैकगतिकौ द्वौ च द्वितीयगतिकौ परौ ।
एतद्व्यत्ययतो भेद एक एव स्फुटो भवेत् ॥७३॥

(१) स रि१ ग१ म२ प ध नि२

(ii)
त्रिस्वरैकैकगतिका द्वितीयगतिकौ परौ ।
एतद्व्यत्ययतो भेद एक एव प्रकीर्तितः ॥७४॥

स रि१ ग१ म१ प ध२ नि२

---

(i) 'त्रिस्वरैकैकगतिकाः द्वितीयगतिकोऽपरः' इति Z8 ग्रन्थोक्तक्रमेण तु चत्त्वार एव भेदा भवन्ति । ग्रन्थोक्तावन्यौ द्वौ भेदौ तु व्युत्क्रमेण हि सम्भवन्ति । व्युत्क्रमेण कतिपयेऽन्यभेदा अपि सम्भाव्याः—तद्यथा–

(७) सरि२ ग म१ प ध१ नि१
(८) स रि२ ग१ म प ध१ नि१ इत्यादयः ।

(ii) अस्य क्रमत एव द्वितीयो भेदोऽपि सम्भाव्यः
तद्यथा—स रि ग१ म१ प ध२ नि२

( i )

एकैकगतिकस्त्वेकस्तृतीयगतिकोऽपरः ।
एतत् क्रमव्युत्क्रमतो रुद्रभेदाश्च कीर्तिताः ॥७५॥

(१) स रि१ ग म प ध नि३
(२) स रि ग३ म१ प ध नि
(३) स रि ग म१ प ध नि३
(४) स रि ग म प ध१ नि३
(५) स रि ग३ म प ध नि१ (ii)
(६) स रि ग म३ प ध नि१
(७) स रि१ ग म३ प ध नि
(८) स रि ग१ म३ प ध नि
(९) स रि ग म३ प ध१ नि
(१०) स रि ग३ म प ध१ नि
(११) स रि ग१ म प ध नि३ (iii)

( iv )

एकैकगतिकस्त्वेकस्तृतीयगतिकौ परौ ।
एतत्क्रमव्युत्क्रमतो द्वादश परिकीर्तिताः ॥७६॥

---

( i ) व्युत्क्रमतश्चान्ये भेदा अपि सम्भाव्याः—
तद्यथाः—स रि२ ग२ म१ प ध१ नि१ इत्यादयः

( ii ) अस्मिन पुस्तके हिजेजमेल एव । Z8-9 ग्रन्थयोः 'गनीत्र्येकगति'रिति पाठो लभ्यते किन्तु Z10 पुस्तके हिजेजमेलस्य 'गनीत्वेकगति' रिति पाठोपलभ्यते । ग्रन्थकर्तुः सद्रागचन्दोदये ' मोलघुपूर्वशब्दः । निः कैशिकी ··· ' एव पठितः । (मो लघुः = गस्त्रिगतिकः) । तस्मात् 'गनीत्र्येकगतिः' पाठ एव समीचीनः । Z8; Z9 एवं Z10 ग्रन्थेषु 'निगयोरेकैकगति' रिति प्रस्तारस्य टोडीमेलो वर्तते । (द्विर्द्वि स्वरैकैकगतिभेदतः सप्तमो क्रमः)

(iii) अत्र नादरामक्रीमेलः

(iv) अस्य प्रस्तारस्य 'स रि१ ग३ म प धनी'—त्यादय अन्ये भेदा अपि सम्भाव्याः ।

(१) स रि [१] ग [३] म [३] प ध नि
(२) स रि [१] ग म [३] प ध नि [३]
(३) स रि [१] ग म प ध [३] नि [३]
(४) स रि ग [१] म [३] प ध नि [३]
(५) स रि ग [१] म प ध [३] नि [३]
(६) स रि ग म१ प ध३ नि३
(७) स रि३ ग३ म१ प ध नि
(८) स रि३ ग३ म प ध१ नि
(९) स रि३ ग३ म प ध नि१
(१०) स रि ग३ म३ प ध१ नि
(११) स रि ग३ म३ प ध नि१
(१२) स रि ग म३ प ध१ नि३

एकैकगतिकस्त्वेकस्तृतीयगतिकास्त्रयः ।
एतत् प्रकारतो भेदाः दशधा परिकीर्तिताः ॥७७॥

(१) स रि [१] ग [३] म [३] प ध नि [३]
(२) स रि [१] ग म [३] प ध [३] नि [३]
(३) स रि ग [१] म [३] प ध [३] नि [३]
(४) स रि [३] ग [३] म [३] प ध नि [१]
(५) स रि [३] ग [३] म [३] प ध [१] नि
(६) स रि [३] ग [३] म [१] प ध नि [३]
(७) स रि [१] ग [३] म प ध [३] नि [३]
(८) स रि [३] ग [३] म प ध [३] नि [३]
(९) स रि ग [३] म [१] प ध [३] नि [३]
(१०) स रि ग [३] म [३] प ध [१] नि [३]

एक एवैकगतिकश्चत्वारस्त्रिगतिस्वराः ।
एतत्क्रमव्युत्क्रमतस्त्रिविधः परिकीर्तितः ॥७८॥

